## अथ द्वितीयोध्यायः ।

न शक्तिः स्वतन्त्रा ॥ १ ॥ सा परतन्त्रा ॥ २ ॥ विष्णोर्योगनिद्रा ॥ ३ ॥ माया ॥४॥ वैष्णवी ॥५॥ विष्ण्वधीना ॥६॥ रुद्रशक्तिः ॥७॥ ईश्वरस्त्रिगुणात्मकः ॥८॥ स वै नारायणः॥९॥ स ईशः कारणम् ॥ १० ॥ त्रयः कार्यमयाः ॥ ११ ॥ सत्त्वमयो विष्णुः ॥ १२ ॥ वरस्त्रिषु ॥ १३ ॥ ज्ञेयो नारायणः ॥ १४ ॥ ध्येयो विष्णुरिति पराशरः ॥ १५ ॥

इति श्रीशाक्तदर्शने द्वितीयाध्यायस्य प्रथमः पादः ॥

### अथ द्वितीयः पादः

स्वतन्त्रत्वादिषाड्गुण्य ईश्वरः ॥ १ ॥ सामासेन मायोपहितः ॥ २ ॥ चिद्योगाढ्या शक्तिः ॥ ३ ॥ न माया ॥ ४ ॥

---

### अथ द्वितीयोध्यायः ।

अधुना पराशरमतं संक्षेपतः कथ्यते—**न शक्तिः स्वतन्त्रेत्यादिना ।** तन्मते नारायणः परमेशः स एव जगतः कारणम् । तथा च श्रुतिः—'नारायणः परं ब्रह्म आत्मा नारायणः परः' ( नारा. १३।१ ) इति । ब्रह्मविष्णुरुद्रास्त्रयः कार्यमयाः । तेषु सत्त्वमयो विष्णुः श्रेष्ठः । अतो विष्णुर्ध्येयः । नारायणश्च ज्ञेयः । रुद्रशक्तिभूता माया केवलं विष्णोर्योगनिद्रा । विष्ण्वधीनत्वात् सा न स्वतन्त्रेति । विस्तरस्तु नारायणोपनिषदोवगन्तव्यः ॥

इति पराशरमतनिरूपणं नाम सप्तमं प्रकरणम् ॥

*उपरिनिर्दिष्ट पराशरमतं निरस्यते*—**स्वतन्त्रत्वादिषाड्गुण्य ईश्वरः** इत्यादिना । गुणषट्कयुतः परमेश्वरो न परं तत्त्वम् । शक्तिरेव परं तत्त्वम् । सा च शक्तिश्चिद्योगसंपन्ना । न माया न वा चित्स्वातन्त्र्येण वर्तते । माया तु द्विविधा । महामाया तामसी माया च । तत्र महामाया त्रिगुणात्मिका शक्त्यधीना । अनया महामायया युता शक्तिरेवेश्वरशब्देनोच्यते । तथा च स ईश्वरो मायोपहितो न स्वतन्त्रो जगन्निर्माणादिकर्मणि । तामसी माया रुद्रशक्तित्वेन

शक्तिरीश्वरः ॥ ५ ॥ न चित् ॥ ६ ॥ ईश्वरः स्वतन्त्रः ॥ ७ ॥ न परतन्त्रः ॥ ८ ॥ गुणमयी महामाया ॥ ९ ॥ शक्त्यधीना ॥ १० ॥ वैष्णवी तामसी माया ॥ ११ ॥ रुद्रशक्तिः ॥ १२ ॥ विष्ण्वधीना ॥ १३ ॥ न महामाया विष्ण्वधीना ॥ १४ ॥ तं च प्रापयति नानाविधयोनिषु ॥ १५ ॥ न विष्णुरीश्वरः ॥ १६ ॥ शक्तिरीश्वर इति हयग्रीवः ॥ १७ ॥

इति श्रीशाक्तदर्शने द्वितीयाध्यायस्य द्वितीयः पादः ॥

*अथ तृतीयः पादः*

न शक्तिः स्वतन्त्रा ॥ १ ॥ रुद्राधीना ॥ २ ॥ कारणात्मक ईश्वरः ॥ ३ ॥ रुद्रः सत्त्वमूर्तिः ॥ ४ ॥ पारमार्थरुद्र ईश्वरः ॥ ५ ॥ व्यावहारिको गुणी रुद्रः ॥ ६ ॥ अतो रुद्र इति गौतमः ॥ ७ ॥ द्रव्यशक्तेर्मायाया ईशो रुद्रः ॥ ८ ॥ कारणाभिमानित्वादीश इति ॥ ९ ॥ न स्वतन्त्रः ॥ १० ॥ शक्तिपुत्रेण तच्छिरोघाती ॥ ११ ॥

---

वर्तमाना विष्ण्वधीना भवति। न महामाया विष्ण्वधीना भवति, परंतु विष्णुमेव तं तं लोकं यथेच्छया प्रापयति। अतः महामायैवेश्वरी। सा च शक्तिः॥

इति पराशरमतनिरासो नामाष्टमं प्रकरणम् ॥

अतःपरं गौतममतं निरूप्यते—न शक्तिः स्वतन्त्रेत्यादिना। गौतममते रुद्र एव परा देवता। तथा चोपनिषदि '*एको हि रुद्रो न द्वितीयाय तस्थुः*' इति। रुद्राधीनं सर्वम्। शक्तिरपि रुद्राधीना। पारमार्थिको रुद्रः सत्त्वमूर्तिः सर्वेश्वरः। व्यावहारिकस्तु तमोगुणयुतः॥

इति गौतममतं नाम नवमं प्रकरणम् ॥

एतद् गौतममतं निराक्रियते—द्रव्यशक्तेरित्यादिना। द्रव्येषु वर्तमानाया मायाया ईशो रुद्रः न सर्वेश्वरः। कारणाभिमानित्वात्तस्येश इति नाम। वस्तुतस्तु स शक्त्यधीनः। अत एव स शक्तिपुत्र इव वर्तमानः शक्तिपुत्रस्य गणपतेः शिरः छिन्नवान्। रुद्रकृतस्य गणपतिशिरश्छेदस्य कथा शिवपुराणतोऽवगन्तव्या

॥ २ ॥ सदेवेदमग्र आसीत् ॥ ३ ॥ वाक्यत्रयेण त्रिधाभिधेययुतं ब्रह्मैव ॥ ४ ॥ समष्टितत्पदलक्ष्यं निर्गुणं ब्रह्म॥ ५॥ त्वंपदलक्ष्यो जगद्बीज आत्मा ॥ ६ ॥ निरुपाधित्वे मूलप्रकृतेर्बाह्यान्तर्व्याप्य संस्थितं सत् ॥ ७ ॥ अद्वैतावस्थानरूपसमाधिसिद्ध्यर्थं मूलप्रकृतेरप्यभावः सिद्धत्वात् ॥ ८ ॥ जगद्बीजाभावः ॥ ९ ॥ बाधितं द्वयमपि ॥ १० ॥ अबाधितं प्रथमम् ॥ ११ ॥ व्यावहारार्थं ब्रह्मावस्थादर्शनार्थमेव प्रवर्तितानि वाक्यानि॥ १२॥ अवस्थावाक्येष्वपि निर्गुणं ब्रह्मैव ॥ १३ ॥ जगद्बीजकारणं ब्रह्म ॥ १४॥ जीवेशशक्तिकालकारणं जगद्बीजः ॥ १५ ॥ व्यक्तप्रपञ्चकारणं कालेशशक्तयः ॥१६॥ स्थूलप्रपञ्चकारणं हिरण्यगर्भः ॥१७॥ परम्पराकारणबोधकान्यन्यवाक्यानि ॥ १८॥ ब्रह्म वा इदमग्र आसीदिति परमार्थम् ॥ १९ ॥ आत्मा वा इदमग्र आसीदिति जगद्बीजात्मकतुर्यबोधकम् ॥ २० ॥ प्रपञ्चत्रयबोधकपूर्वं तुर्यसूचकम् ॥ २१ ॥ सदेवेदमग्र आसीदिति बीजावस्थायामपि निराभासादेकत्वबोधकपूर्वं द्वैतेप्यद्वैतबोधकं च ॥ २२ ॥ अहं गणपतिरेक एवासानीति सद्ब्रह्मणो व्यक्तावस्थाबोधकम् ॥ २३ ॥ इदं जगद् व्याकृतमासीदिति व्यक्तप्रपञ्चनिषेधपूर्वकमव्यक्तबोधकम् ॥ २४ ॥ देवी

---

वाक्यमीषच्छब्दभेदेन प्रदर्शयति—सदेवेदमग्र आसीदिति । बादरिमते त्रीण्येतानि वाक्यान्यनुक्रमेण निर्गुणं ब्रह्म, जगद्बीजभूतमात्मानं, मूलप्रकृतिमन्तर्बहिश्च व्याप्य स्थितं सत्तत्वं च लक्षयन्ति । वस्तुतस्तु निर्गुणं ब्रह्मैव परमार्थं । जगद्बीजभूत आत्मा तथा च सत्तत्वमेते द्वे ब्रह्मणोवस्थे एव । अहं गणपतिरिति। गणपतिरेवैकं तत्त्वमित्यापाततः प्रतिज्ञापयदिदं वाक्यं ब्रह्मणो व्यक्तामेवावस्थां दर्शयति । तथा चेदं जगद् व्याकृतमासीदिति वाक्यस्याव्याकृतावस्थाबोधे एव तात्पर्यम् । तथैव देवी ह्येकाग्र आसीदिति वाक्यस्य मायाया अनादित्वबोधे

ह्येकाग्र आसीदिति मायाया अनादित्वबोधकम् ॥ २५ ॥ कालात्प्रसूतिं मन्यन्तेति कालानादित्वबोधकम् ॥ २६ ॥ आद्यो ब्रह्मा ॥ २७ ॥ वासुदेवो वा इदमग्र आसीत् ॥ २८ ॥ एक एव रुद्रो न द्वितीयाय तस्थे ॥ २९ ॥ व्यावहारेशस्य व्यक्ताव्यक्तबोधकानि ॥ ३० ॥ ईश्वरानादित्वबोधकान्यपि ॥ ३१ ॥ पारमार्थे जगन्मिथ्यात्वाज्जगद्वीजोपि बाध्यते ॥३२॥ अतः परमार्थं ब्रह्म इदमग्र आसीदिति ॥ ३३ ॥ अन्यान्यपारमार्थ्यानीति बादरिः ॥ ३४ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः

ब्रह्मनिष्ठा शक्तिर्निर्गुणा ॥ १ ॥ साक्षिस्था सगुणा निराभासा ॥ २ ॥ ईश्वरी साभासा ॥ ३ ॥ व्यक्तप्रपञ्चकारणमीश्वरी शक्तिः ॥ ४ ॥ तुर्यात्मिका कारणस्य ॥ ५ ॥ निर्गुणा तुर्यस्य ॥ ६ ॥ देवी

---

एव तात्पर्यम् । कालात् प्रसूतिमिति । अत्र 'मन्यन्तेति' इत्यपपाठः। 'मन्यन्त इति' साधुः पाठः । वासुदेवो वेति । 'वासुदेवः सर्वमिति' (भ. गी. ७।१९) एतद्गीतावाक्यमत्र सदृशतयानुसंधेयम् । एतद्वाक्यं तथा च 'एको हि रुद्रो न द्वितीयाय तस्थुः' (श्वे. ३।२) इति श्वेताश्वतरोपनिषद्गतं तथैव 'एको रुद्रो न द्वितीयाय तस्थौ' इति चाथर्वशिरसि दृश्यमानं वाक्यं व्यावहारेशं बोधयन्ति। एवं च ब्रह्म वा इदमग्र आसीदिति ब्रह्मैकत्वप्रतिपादकं मुख्यं महावाक्यम्। आत्मसद्गणपतिवासुदेवरुद्रादीनुच्चार्य तदेकत्वप्रतिपादकानीतस्तत उपनिषत्सु दृश्यमानानि महावाक्यानि ब्रह्मणस्तास्ता अवस्थाः यद्यप्यापाततः प्रतिपादयन्ति, तथापि सर्वाण्येतान्यन्ते ब्रह्मैकत्वप्रतिपादनपराण्येव ॥

इति बादरिमतनिरूपणं नामैकषष्टितमं प्रकरणम् ॥

अथ बादरिमतं निरासयन्नाह—ब्रह्मनिष्ठा शक्तिरिति । बादरिमतप्रतिपादने दर्शितानि सर्वाणि महावाक्यानि न ब्रह्मप्रतिपादकानि किंतु ब्रह्मनिष्ठशक्ति-

ह्येकाग्र आसीदिति वाक्येन ब्रह्म वा इदमग्र आसीदित्यादिसर्ववाक्यार्थसिद्धान्तमेव बोधितम् ॥ ७ ॥ परंपराक्रमेणापि सर्वकारणं शक्तेरेवेति हयग्रीवः ॥ ८ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य चतुर्थः पादः ॥

द्वादशोध्यायः समाप्तः ॥

---

अथ त्रयोदशोध्यायः ॥

चतुष्टयवैराग्यसंपन्नो योगाधिकारी ॥१॥ श्रवणमननसंपन्नाष्टाङ्गेन निर्विकल्पम् ॥ २ ॥ रहितः श्रवणादिषु ॥ ३ ॥ वैराग्ययोगी त्रिधा ॥४॥ हठराजमन्त्रयोगीति ॥५॥ हठमार्गादष्टाङ्गपरो हठयोगी ॥ ६ ॥ राजमार्गाद्राजयोगी ॥ ७ ॥ मन्त्रमार्गान्मन्त्रयोगी ॥ ८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसविकल्प-

---

प्रतिपादकानि । वस्तुतः शक्तिरेव निर्गुणं परं तत्त्वं देवी ह्येकाग्र आसीदिति वाक्येन बोध्यते । निर्गुणेयं शक्तिः साक्षिरूपात्मनि वर्तमाना सगुणा भवति । ततोनन्तरं चिदाभासयुतेश्वरी शक्तिरिति कथ्यते व्यक्तप्रपञ्चकारणं च भवति ॥

इति बादरिमतनिरासो नाम द्विषष्टितमं प्रकरणम् ॥

अथ शक्तिब्रह्मज्ञानसाधनं योगमाह—चतुष्टयवैराग्यसंपन्न इति । स्त्रियोन्नं पानमैश्वर्यमिति चत्वारि वस्तूनि चतुष्टयशब्देनाभिप्रेतानि । एतद्विषये वीतरागस्यैव योगाधिकार इति भावः । श्रवणमननेति । यमनियमासनेत्यादीन्यष्ट योगाङ्गानि प्रसिद्धान्येव । श्रवणमननाभ्यां सहितैरेतैरष्टभिरङ्गैः संपन्नो योगी निर्विकल्पस्य समाधेरधिकारी भवति । अनन्तरं श्रवणादीन्यप्यनपेक्षमाणो वैराग्ययोगी भवति । स च त्रिप्रकारः । हठयोगी राजयोगी मन्त्रयोगीति ॥

इति योगिप्रकारत्रयनिरूपणं नाम त्रिषष्टितमं प्रकरणम् ॥

अथाष्टाङ्गयोगं निरूपयति—यमनियमेति । एतान्यष्टाङ्गानि योगशास्त्रे प्रसिद्धानि ( पात. यो. सू. २।२९ ) । एषां स्वरूपमग्रे एव स्फुटीभविष्यति ।

समाधयोऽष्टाङ्गानि योगस्य ॥ ९ ॥ राजयोगस्तमः ॥ १० ॥ सर्वं खल्विदं ब्रह्मेति विषयेभ्य इन्द्रियनिग्रहो यमः ॥ ११ ॥ अन्तः-करणवृत्तिं प्रपञ्चान्निगृह्य ब्रह्मविषयीकरणं नियमः ॥ १२ ॥ सुखेन ब्रह्मचिन्तनप्रदस्थितिरासनम् ॥ १३ ॥ चित्तादिसर्वभावान् ब्रह्मभावनद्वारा निरोधः प्राणायामः ॥ १४ ॥ अहं ब्रह्मेति वृत्तिः पूरकः ॥ १५ ॥ अनात्मप्रपञ्चनिषेधो रेचकः ॥ १६ ॥ अखण्डा-कारवृत्त्या निश्चलस्थितिः कुम्भकः ॥ १७ ॥ शब्दादिविषये-ष्वप्यात्मदर्शनं प्रत्याहारः ॥ १८ ॥ मनोविषयेषु ब्रह्मदर्शनानुसंधानं धारणा ॥ १९ ॥ अहं ब्रह्म इत्यखण्डाकारवृत्त्यां निश्चलस्थितिर्ध्यानम् ॥ २० ॥ त्रिपुटिराहित्याखण्डाकारवृत्तिः समाधिः ॥ २१ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

विषयेभ्यश्चित्तवृत्तिनिरोधो योगः ॥ १ ॥ चित्तं पञ्च ॥ २ ॥

---

**राजयोगस्तमः**। पाठभ्रंशोऽत्र दृश्यते। तमः इति शब्दस्य कोऽर्थोऽभिप्रेत इति न ज्ञायते। नान्धकारवाचित्वम्। तम इति तमप्प्रत्ययसादृश्येन श्रेष्ठवाचीति भाति। तथा च राजयोगः सर्वश्रेष्ठ इति भावः। तस्य स्वरूपं यमादिभिरङ्गैर्निर्दर्शयति—**सर्वं खल्विदमिति**। सर्वं खल्विदं ब्रह्मेति निष्ठासंपन्नस्य बाह्येन्द्रियनिग्रहो यमः। अत्र सर्वत्र यमनियमादयो योगशास्त्रे व्याख्याता गृह्यन्ते। (पात. यो. सू. २।३०–३।३) तेषु च प्रत्येकमपेक्षिता अन्तःकरणवृत्तयस्तत्र तत्र वर्ण्यन्ते। ताश्च यमनियमादिशब्दानां व्याख्यात्वेन कथ्यन्ते। **त्रिपुटिराहित्यादि**ति। त्रिपुटीनिरासस्वरूपं मण्डलब्राह्मणोपनिषदि द्रष्टव्यम् ॥

इति राजयोगनिरूपणं नाम चतुःषष्टितमं प्रकरणम् ॥

अथ सामान्येन योगस्वरूपं निरूपयति—**विषयेभ्य इति**। योगश्चित्तवृत्ति-निरोध इति तु सर्वमान्या सामान्या योगशब्दस्य व्याख्या (पा. यो. सू. १।२) **चित्तं पञ्चेति**। चित्तशब्देनात्र चित्तवृत्तयो लक्ष्यन्ते। ताश्च प्रमाणविपर्यय-

क्षेपमूढयोर्नाधिकारो योगे ॥ ३ ॥ अभ्यासयोगमयो विक्षेपः ॥ ४ ॥ एकाग्रभूमिकामयो भुवनराजः ॥ ५ ॥ गुदमेढ्रान्तरालगो मूलवह्निः ॥ ६ ॥ मूलप्रकृतिमय आधारः ॥ ७ ॥ साभासा शक्तिर्ब्रह्मरन्ध्रे ॥ ८ ॥ आधारे व्यावहारब्रह्म गणपतिः ॥ ९ ॥ राजसस्थाने नाभौ ब्रह्मा ॥ १० ॥ हृदि सत्त्वे विष्णुः ॥ ११ ॥ हृच्चक्रे तामसो रुद्रः ॥ १२ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १३ ॥ मणिपूरे वा विष्णुः ॥ १४ ॥ अनाहते रुद्रः ॥ १५ ॥ विशुद्धचां जीवसाक्षी ॥ १६ ॥ आज्ञाया-मीशसाक्षी ॥ १७ ॥ ब्रह्मरन्ध्रे परा शक्तिः ॥ १८ ॥ ध्यानसिद्ध्या समाधिम् ॥ १९ ॥ सविकल्पान्निर्विकल्पम् ॥ २० ॥ तत्सिद्धो मुक्तः ॥ २१ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य द्वितीयः पादः ॥

---

विकल्पनिद्रास्मृतिरूपाः पञ्च ( पा. यो. सू. १।६ )। क्षेपमूढयोरिति। क्षेप-शब्देनात्र चित्तस्य क्षिप्तावस्थोच्यते यस्यां चित्तं स्वोपसर्जनरजस्तमःसंसर्गा-दणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं भवति यथा दैत्यदानवादीनाम्। तच्च यदा अभिभूतरजस्कतमसानुविद्धं भवति तदा मूढावस्थमित्युच्यते। यथा रक्षः-पिशाचादीनाम्। तदेव चित्तं यदा प्रक्षीणतमस्करजोमात्रासंसर्गात्सर्वविषयाकार-वृत्तिमद्धर्मज्ञानवैराग्यैश्वर्यप्रियं तदा विक्षिप्तावस्थमित्युच्यते। एकाग्रं चित्तं भुवनराज इत्युच्यते। अत्र चित्तस्य चतस्र एवावस्था उच्यन्ते। पातञ्जलयोग-सूत्रवृत्तौ नागेशभट्टैः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तस्य पञ्चावस्था उक्ताः ( योगसूत्रवृत्तिः १।२ )॥

इति चित्तावस्थानिरूपणं नाम पञ्चषष्टितमं प्रकरणम् ॥

अधुना देहस्थितषट्चक्रनिरूपणं प्रस्तौति—गुदमेढ्रान्तरालग इति। मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानामानि षट् चक्राणि योगशास्त्रे प्रसिद्धानि। तत्र मूलाधारं गुदमेढ्रयोर्मध्ये पृथ्वीतत्त्वकं पीतवर्णं गन्धगुणं वशप-सरूपं चतुर्दलं चक्रम्। स्वाधिष्ठानं मेढ्रस्योपरिवर्तमानं जलतत्त्वकं शुभ्रवर्णं रस-

अथ तृतीयः पादः ॥

नानासिद्धिदो हठयोगः ॥ १ ॥ अहिंसाद्या यमा दश ॥ २ ॥ यज्ञव्यतिरिक्तविषयेषु हिंसावर्जनमहिंसा ॥ ३ ॥ दृष्टश्रुतज्ञानोक्तिः सत्यम् ॥ ४ ॥ पारकीयनिवृत्तिरस्तेयम् ॥ ५ ॥ परस्त्रीवर्जनं ब्रह्मचर्यम् ॥ ६ ॥ भूतानुज्ञा दया ॥७॥ शत्रुमित्रैकस्थितिरार्जवम् ॥८॥ शत्रुपीडायामपि क्षोभनिवृत्तिः क्षमा ॥ ९ ॥ विज्ञाननिष्पत्तिर्धृतिः ॥ १० ॥ त्रिभागोदरभोजनं मिताहारः ॥ ११ ॥ स्वदेहमलमोचनं

---

गुणं वभमयरलरूपं षड्दलं चक्रम् । तृतीयं मणिपूरं नाभिदेशे स्थितं तेजस्तत्त्वकं रक्तवर्णं रूपगुणं डादिदशवर्णरूपं दशदलम् । चतुर्थमनाहतं हृद्देशे स्थितं वायुतत्त्वकं धूसरवर्णं स्पर्शगुणं कादिद्वादशवर्णरूपं द्वादशदलम् । पञ्चमं विशुद्धं कण्ठदेशे स्थितमाकाशतत्त्वकं शुभ्रवर्णं शब्दगुणं षोडशस्वररूपं षोडशदलम् । षष्ठमाज्ञाचक्रं भ्रुवोर्मध्ये स्थितं मनोवृत्तिरूपं हक्षवर्णात्मकं द्विदलम् । ब्रह्मरन्ध्रं तु सर्वेषामेषां षट्चक्राणामुपरि मूर्ध्नि स्थितम् । तत्र ब्रह्मरन्ध्रे साभासा शक्तिः । मूलाधारे गणपतिर्व्यावहारिकब्रह्मरूपः । नाभिचक्रे मणिपूरे ब्रह्मा । अनाहतचक्रे हृदि विष्णुः । हृच्चक्रे रुद्रस्तामसः । अथवा केषांचिन्मतेन ब्रह्मरन्ध्रे परा शक्तिः । आज्ञायामीशः साक्षी । विशुद्धौ साक्षी जीवः । अनाहते रुद्रः । मणिपूरे च विष्णुः । ध्यानसिद्धया सविकल्पः समाधिस्ततो निर्विकल्पः । निर्विकल्पकसमाधिसिद्धिरेव मुक्तिः ॥

इति षट्चक्रनिरूपणं नाम षट्षष्टितमं प्रकरणम् ॥

अथ हठयोगस्वरूपमाह—**नानासिद्धिदो हठयोगः** । नानासिद्धिद इति पदं हठयोगस्य वैशिष्ट्यं प्रतिपादयति । अस्मिन् योगे दश यमा वर्तन्ते ते च अहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारशौचनामका यज्ञव्यतिरिक्तेत्यादिदशसूत्र्या सलक्षणं व्याख्याताः । पातञ्जलयोगसूत्रे तु- अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ( योगसूत्र २-३० ) इति सूत्रेण पञ्चैव यमा निर्दिष्टाः ॥

इति यमनिरूपणं नाम सप्तषष्टितमं प्रकरणम् ॥

शौचम् ॥ १२ ॥ संतोषाद्या नियमा दश ॥ १३ ॥ यदृच्छालाभप्रीतिः संतोषः ॥१४॥ श्रौतस्मार्तविश्वास आस्तिक्यम् ॥१५॥ सत्पात्रे दीयमानं दानम् ॥ १६ ॥ शक्त्यर्चनमीशपूजनम् ॥ १७ ॥ व्रतैः शरीरशोषणं तपः ॥ १८ ॥ कुत्सितकर्मलज्जा ह्रीः ॥ १९ ॥ वैदिकश्रद्धा मतिः ॥ २० ॥ मन्त्राभ्यासो जपः ॥ २१ ॥ व्रतदिवसेषु नियमस्थितिर्व्रतः ॥ २२ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः ॥

पद्मादीन्यासनानि ॥१॥ ऊर्वोरुपरिकृतपादाङ्गुल्योर्हस्ताभ्यां व्युत्क्रमग्रहणं पद्मासनम् ॥ २ ॥ ऋजुकायेन दक्षिणोरुणि वामपादविन्यासो वीरासनम् ॥ ३ ॥ गुल्फौ सीवनीपार्श्वयोः

---

अथ हठयोगगतान् दश नियमानाचष्टे–संतोषाद्या नियमा दशेति। ते च संतोषास्तिक्यदानेशपूजनतपोह्रीमतिजपव्रतनामका दश व्याख्यापूर्वकं यदृच्छालाभेति दशसूत्र्या प्रतिपादिताः इति यद्यपि स्पष्टमत्रोक्तं तथापि वस्तुतोत्र नवैव नियमा व्याख्याता उपलभ्यन्ते। जाबालदर्शनोपनिषदि (२।१-१६) दश नियमा व्याख्याताः। तन्मध्ये दृश्यमानः सिद्धान्तश्रवणनामा वेदान्तश्रवणेति व्याख्यातो नियमोत्र न दृश्यते। कदाचिल्लेखकप्रमादाद् गलितो भवेत्। कदाचिन्नियमा नव इति मूलपाठः स्यात्। योगसूत्रे तु शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः (योगसूत्र २।३२) इति सूत्रेण पञ्चैव नियमाः प्रतिपादिताः। व्रतदिवसेष्विति। व्रत इति सौत्रं पुंस्त्वम् ॥

इति नियमनिरूपणं नामाष्टषष्टितमं प्रकरणम् ॥

अधुना आसनानि व्याचष्टे–पद्मादीन्यासनानीति। तत्र पद्मासनं व्याचष्टे–ऊर्वोरुपरीति। योगसूत्रवृत्तौ पद्मासनं व्याख्यातम्–"अङ्गुष्ठौ संनिबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे" इति। तथैव "एकपादमथैकस्मिन्विन्यस्योरौ च संस्थितः। इतरस्मिंस्तथा पादं वीरासनमुदाहृतम्" इति वीरासनं व्याख्यातम्। भद्रासनं व्याचष्टे–गुल्फाविति।

क्षिप्त्वा पार्श्वपादयोः पाणिभ्यां ग्रहणं भद्रम् ॥ ४ ॥ सुखधैर्यप्रदं सुखासनम् ॥ ५ ॥ षण्णवत्यङ्गुलात्मको देहः ॥ ६ ॥ वह्निशिखाग्रगो मूलाधारः ॥ ७ ॥ तस्मात्सर्वोत्पत्तिः ॥ ८ ॥ आधारज्ञाता परं पदम् ॥ ९ ॥ तत्रैव कुण्डलिनी शक्तिः ॥ १० ॥ व्यवहारब्रह्मसाक्षी गजाननः ॥ ११ ॥ आधारे नाडीकन्दम् ॥ १२ ॥ नाड्यो द्विसप्ततिसहस्राणि ॥ १३ ॥ चतुर्दश मुख्याः ॥ १४ ॥ सुषुम्ना ब्रह्मनाडी ॥ १५ ॥ वीणादण्डेन ब्रह्मरन्ध्रम् ॥ १६ ॥

---

योगसूत्रवृत्तौ—"गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः । भद्रासनं भवेदेतत्सर्वव्याधिविषापहम्" इत्येवं भद्रासनमुपवर्णितम् । योगसूत्रव्यासभाष्ये तु पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनम् उष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीन्यासनानि वर्णितानि वाचस्पतिकृतटीकायां च व्याख्यातान्युपलभ्यन्ते ॥

इत्यासननिरूपणं नामैकोनसप्ततितमं प्रकरणम् ॥

अथ देहवर्णनपूर्वकं मूलाधारचक्रं वर्णयति—**षण्णवत्यङ्गुलेति** । स्वाङ्गुलिपरिमाणेन नरस्य षण्णवत्यङ्गुलिपरिमितोन्मानो देहः । तत्र सर्वोत्पत्तिकरं मूलाधारचक्रं मूलवह्निशिखाग्रे गुदमेढ्रान्तराले तिष्ठति । इदमेव कुण्डलिन्याः व्यवहारब्रह्मसाक्षिणो गजाननस्य च स्थानम् । इत एव सर्वा नाड्यो नाडीकन्दात् प्रवर्तन्ते कन्दोर्ध्वे च कुण्डलिन्याः स्थितिः । **नाड्यो द्विसप्ततिसहस्राणीति** । आसां नाडीनां संख्योद्गमस्थानं च भिन्नभिन्नत्वेन वर्णितं तत्रतत्रोपनिषत्सु । तथा च च्छान्दोग्योपनिषदि काठकोपनिषदि च दृश्यते—शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति (छा. ८।६।६, कठ ६।१६) इति । प्रश्नोपनिषदि चैवैव संख्या दृश्यते 'अत्रैतदेकशतं नाडीनाम्' (प्रश्न ३।६) इति । बृहदारण्यके तु 'हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते' (बृह. २।१।१९) इति । **सुषुम्ना ब्रह्मनाडीति** । अत्र सुषुम्नाया एव ब्रह्मनाडीत्वेनोल्लेखो दृश्यते ।

कन्दोर्ध्वे कुण्डलिनी ॥ १७ ॥ सुषुम्ना योगसिद्धिदा ॥ १८ ॥

इति श्रीशाक्तदर्शने त्रयोदशाध्यायस्य चतुर्थः पादः ॥

त्रयोदशोध्यायः समाप्तः ॥

---

## अथ चतुर्दशोध्यायः ॥

ब्रह्मरन्ध्रमुखं स्वमुखेन समावेष्टय कन्दपार्श्वेषु निरुध्य संस्थिता कुण्डलिनी. ॥ १ ॥ सुषुम्नापार्श्वयोरिडापिङ्गले ॥ २ ॥ पृष्ठपार्श्वयोः कुहूसरस्वती ॥३॥ गान्धारहस्तिजिह्वा समायाः ॥४॥ पूषायशस्विनी पिङ्गलायाः ॥ ५ ॥ कुहूहस्तिजिह्वामध्ये विश्वोदरा ॥ ६ ॥ कुहूयशस्विन्योर्वरुणा ॥ ७ ॥ पूषासरस्वत्योः यशस्विनी ॥८॥ गान्धारसरस्वत्योः शङ्खिनी ॥९॥ वामनासान्तमिडा ॥१०॥

---

नागेशभट्टकृतयोगसूत्रवृत्तौ तु सुषुम्नायाः शाखात्वेन वर्ण्यते ब्रह्मनाडी (योगसूत्रवृत्ति १।३६)। सुषुम्णेत्यपि पाठः क्षुरिकोपनिषदि दृश्यते ॥

इति मूलाधारनाडीकन्दनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना चतुर्दशमुख्यनाडीस्तासां स्थानानि विस्तारं च वर्णयति–ब्रह्मरन्ध्रमुखमिति। एताश्चतुर्दश नाडयस्तु—कुण्डलिनी सुषुम्ना इडा पिङ्गला कुहूः सरस्वती गान्धारी हस्तिजिह्वा पूषा यशस्विनी विश्वोदरा वरुणा यशस्विनी शङ्खिनी च। योगचूडामण्युपनिषदि तु किञ्चिद्भेदेनैतत्पठ्यते। तथा च–" *तत्र नाडयः समुत्पन्नाः सहस्राणां द्विसप्ततिः। तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृताः॥* प्रधानाः प्राणवाहिन्यो भूयस्तासु दश स्मृताः। इडा च पिङ्गला चैव सुषुम्ना च तृतीयगा॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी। अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता॥ एतन्नाडीमहाचक्रं ज्ञातव्यं योगिभिः सदा। इडा वामे स्थिता भागे दक्षिणे पिङ्गला स्थिता॥ सुषुम्ना मध्यदेशे तु गान्धारी वामचक्षुषि। दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे। यशस्विनी वामकर्णे चानने चाप्यलंबुसा। कुहूश्च लिङ्गदेशे तु मूलस्थाने तु शङ्खिनी" (योगचूडामणि

दक्षिणान्तं पिङ्गला ॥ ११ ॥ वामपादाङ्गुष्ठान्तं यशस्विनी ॥ १२ ॥ वामाक्ष्यन्तं पूषा ॥ १३ ॥ याम्यकर्णान्तं पयस्विनी ॥ १४ ॥ जिह्वान्तं सरस्वती ॥ १५ ॥ सव्यपादाङ्गुष्ठान्तं हस्तिजिह्वा ॥ १६ ॥ शङ्खिनी सव्यकर्णान्तम् ॥ १७ ॥ सव्यनेत्रान्तं गान्धारी ॥ १८ ॥ विश्वोदरा कन्दस्था ॥ १९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

नाडीसंचारका वायवः ॥ १ ॥ वायवो दश ॥ २ ॥ पञ्च मुख्याः ॥ ३ ॥ प्राणापानौ प्रवरौ ॥ ४ ॥ पूज्यः प्राणः ॥ ५ ॥

---

१।१५–२० )। अत्र सूत्रेषु वामयाम्यशब्दौ वामपरौ सव्यशब्दस्तु दक्षिणार्थपरः प्रयुज्यमानो दृश्यते । कदाचिदपपाठः स्यात् ॥

इति चतुर्दशनाडीनिरूपणं नामैकसप्ततितमं प्रकरणम् ॥

अधुना नाडीषु वहमानान्वायून्निरूपयति—नाडीसंचारका वायव इति । वायवो दशेति । एते दश वायवो वर्णिता योगचूडामण्युपनिषदि—'प्राणापानसमानाख्या व्यानोदानौ च वायवः । नागः कूर्मोथ कृकरो देवदत्तो धनंजयः ॥' इति । तेषां च स्थानानि दर्शितानि—'हृदि प्राणः स्थितो नित्यमपानो गुदमण्डले । समानो नाभिदेशे तु उदानः कण्ठमध्यगः । व्यानः सर्वशरीरे तु प्रधानाः पञ्च वायवः । उद्गारे नाग आख्यातः कूर्मे उन्मीलने तथा । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं वापि सर्वव्यापी धनंजयः' ( योगचूडामणि १।२२–२५ ) इति । इडादित्रयाणां त्रिमूर्तय इति । 'सोमसूर्याग्नयस्त्रिमूर्तयः ।' तथा च योगचूडामण्युपनिषदि—'इडापिङ्गलासुषुम्नाः प्राणमार्गे च संस्थिताः । सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः' ( योगचूडामणि १।२१ ) इति ॥

इति नाडीसंचारकवायुनिरूपणं नाम द्विसप्ततितमं प्रकरणम् ॥

इडादित्रयाणां त्रिमूर्तयः ॥ ६ ॥ रेचकपूरककुम्भकात्मकः प्राणायामः ॥ ७ ॥ मूलमन्त्रात्मकः ॥ ८ ॥ हकारस्मरणपूर्वं कर्षणं षोडशमात्रैः पूरकः ॥ ९ ॥ रेफस्य चतुःषष्ट्या तु मात्रया कुम्भकः ॥ १० ॥ ईकारस्य द्वात्रिंशन्मात्रया रेचकः ॥ ११ ॥ क्रमव्युत्क्रमतः ॥ १२ ॥ धारणे मूलमन्त्रजपः ॥ १३ ॥ पूरके वेदसंख्या ॥ १४ ॥ कलाः कुम्भके ॥ १५ ॥ वसु रेचके ॥ १६ ॥ अपानोर्ध्वनयन आनन्दः ॥ १७ ॥ आधाररोधनेन वायुदीप्तो वह्नी रुहति कुण्डलीम् ॥ १८ ॥ सुषुम्नाया वायुर्वह्निनोर्ध्वं गच्छति ॥ १९ ॥ वायुर्जितः ॥ २० ॥ तेन चित्तशुद्धिः ॥ २१ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य द्वितीयः पादः ॥

---

इदानीं प्राणायामस्वरूपं निरूप्यते–रेचकपूरकेति । रेचकपूरकेति क्रमोऽत्र योगग्रन्थाननुसृत्य कृतः । तथा चोक्तम्–‘प्राणायामस्तु विज्ञेयो रेचकपूरककुम्भकैः’ इति । तथैव ‘रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् । प्राणायामोयमित्युक्तः सर्वैः केवलकुम्भकः’ इति । मूलमन्त्रात्मक इति । प्राणायामवेलायां मूलमन्त्रजपः कार्य इत्यर्थः । हकारस्मरणेति । तथा चोक्तं नागेशभट्टैर्योगसूत्रवृत्तौ–‘तत्र मात्रा निमेषोन्मेषावच्छिन्नः कालः, लघ्वक्षरावच्छिन्नो वा । ...प्रणवोच्चारणावच्छिन्नकाल इत्यन्ये । तत्र त्रयोपि द्वादशमात्रावच्छिन्ना इत्यधमः पक्षः । षोडशमात्रावच्छिन्नः पूरकः । चतुःषष्टिमात्रावच्छिन्नः कुम्भकः । द्वात्रिंशन्मात्रावच्छिन्नो रेचक इति वसिष्ठसंहितायाम्’ इति । अत्र तु पूरककुम्भकरेचकवेलायामनुक्रमेण हकाररेफेकाराणां स्मरणं विशेषः तथैव रेचककुम्भकपूरकक्रमेण व्युत्क्रमोप्युक्तः । धारणे इति । रेचकानन्तरं पूरणात्प्राग्यः कालः स धारणशब्देनोच्यते । अयमेव योगसूत्रे चतुर्थशब्देनोच्यते (योगसूत्र २।५१) वेदसंख्येति । वेदसंख्या चतुर्लक्षणा । कलाशब्देन षोडशसंख्योच्यते वसुशब्देन चाष्टौ । अपानोर्ध्वनयन इति । अपानवायोरूर्ध्वगमनसाधनं कष्टसाध्यमपि महानन्दजनकमिति योगशास्त्रे प्रसिद्धम् ॥

इति प्राणायामनिरूपणं नाम त्रिसप्ततितमं प्रकरणम् ॥

अथ तृतीय. पादः॥

इन्द्रियाणां बलादाहरणं विषयेषु प्रत्याहारः ॥ १ ॥ आपादतलमस्तकमनिलमापूर्य पादद्वयाधारनाभिहृत्कण्ठतालुललाटभ्रूमध्यमूर्ध्नि निरोधश्च ॥ २ ॥ बाह्यभूतानि क्रमेणाभ्यन्तरबीजानुस्मरणपूर्वं धारणं धारणा ॥ ३ ॥ पञ्चभूतेषु पञ्च देवान् ॥ ४ ॥ मूलवह्निशिखाग्रे मूलप्रकृतिः ॥ ५ ॥ मूले कुण्डलिनी ॥ ६ ॥ कामदायिनी पीठम् ॥७॥ शक्तिः पद्मम् ॥ ८ ॥ वादिसान्तवर्णकम् ॥ ९ ॥ व्यावहारब्रह्मगणपतिशक्तिपुत्रो देवता ॥ १० ॥ स्वाधिष्ठानं योनिपीठम् ॥ ११ ॥ सादिवर्णकं राजसी ॥ १२ ॥ ब्रह्मा देवता

---

अथ प्रत्याहारो निरूप्यते—*इन्द्रियाणामिति* । तत्तद्विषयेषु तेषां तेषामिन्द्रियाणां विषयेभ्यो दूरीकृत्य स्थिरीकरणं प्रत्याहारः । चित्तं हि इन्द्रियाणि प्रवर्तयति । यदि चित्तं स्थिरीक्रियते तर्हि इन्द्रियाणि विषयेभ्यः प्रत्याहृतानि भवन्त्येव । तथा च योगसूत्रे ' स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः इति प्रत्याहारलक्षणम् । कथं स प्रत्याहारः संपाद्यते तदाह—आपादतलमस्तकेति । प्राणायामबलात्सर्वं शरीरं वायुना ऽऽपूर्य तेषां तेषां शरीरस्थानानां वायुना निरोधः प्रत्याहार इति फलितम् ॥

इति प्रत्याहारनिरूपणं नाम चतुःसप्ततितमं प्रकरणम् ।

अधुना धारणां व्याचष्टे—*बाह्यभूतानीति* । भूतानीत्यस्य स्थाने भूतानामिति पाठः सुगमः । आभ्यन्तरबीजस्मरणपूर्वकं बाह्यभूतेषु चित्तसंस्थापनं धारणेत्युच्यते ॥ तथा च योगसूत्रम्-देशबन्धश्चित्तस्य धारणेति । कथ सा धारणा क्रियते तदाह—*पञ्चभूतेष्विति* । मूलाधारादीनि पञ्च चक्राणि यथाक्रमं पृथिव्यादिपञ्चभूतात्मकानि गणपत्यादिदेवताकानि । *वादिसान्तेति* । वशषसवर्णाः मूलाधारचक्रस्थपद्मस्य चत्वारि दलानि । *स्वाधिष्ठानमिति* । एतच्चक्रस्थपद्मं वादिपड्वर्णमयषड्दलम् । *सादिवर्णकमिति* । अपपाठोयम् ।

॥१३॥ मणिपूरमुड्याणम् ॥१४॥ सात्त्विकी विष्णुर्देवता ॥१५॥ कादिठान्तमनाहतम् ॥ १६ ॥ तामसी रुद्रः ॥ १७ ॥ तालुमूलं जालंधरम् ॥ १८ ॥ स्वरात्मकम् ॥ १९ ॥ महेशः ॥ २० ॥ आज्ञा द्विदलम् ॥ २१ ॥ सदाशिवः ॥ २२ ॥ ब्रह्मरन्ध्रं सहस्रारम् ॥ २३ ॥ देवता परा शक्तिः ॥ २४ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः॥

ओंकारमाधारे ॥ १ ॥ हकारं स्वाधिष्ठाने ॥ २ ॥ रेफं

---

वादिवर्णकमिति समीचीनम् । **मणिपूरमुड्याणमिति** । ओड्याणं ओड्डियाणं वा मणिपूरस्य पर्यायः । तथा च योगचूडामण्युपनिषदि–' ओड्याणं कुरुते यस्माद-विश्रान्तं महाखगः । ओड्डियाणं तदेव स्यान्मृत्युमातङ्गकेसरी । उदरात्पश्चिमं ताणमधोनाभेर्निगद्यते । ओड्याणमुदरे बन्धस्तत्र बन्धो विधीयते ' इति । अस्मिन्मणिपूरे डादिफान्तदशवर्णात्मकं दशदलमोड्याणं चक्रम् । मणिपूरवर्णसंख्यात्र सूत्रकारैर्न निर्दिष्टा । कदाचित्तन्निर्देशकं सूत्रं भ्रष्टं स्यात् । अनाहते चक्रे कादिठान्तद्वादशवर्णात्मकं द्वादशदलं पद्मं वर्तते ॥ **तालुमूलं जालंधरमिति** । वस्तुतो जालंधरमिति बन्धनाम यथोड्डियाणं मणिपूरस्य । तथा च योगचूडामण्युपनिषदि–' ततो जालंधरो बन्धः कष्टदुःखौघनाशनः । जालन्धरे कृते बन्धे कण्ठसंकोचलक्षणे । न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ' ( योगचूडामणि १।५१ ) इति । जालंधरशब्देनात्र षोडशदलं विशुद्धिचक्रं षोडशस्वरात्मकं महेशदेवताकं निर्दिश्यते । **आज्ञा द्विदलमिति** । हक्षेतिवर्णद्वयात्मकं सदाशिवदेवताकम् । **ब्रह्मरन्ध्रं सहस्रारमिति** । षट्चक्रोपरिस्थितं ब्रह्मरन्ध्रं सहस्रारम् । अस्य शक्तिरेव देवता । विस्तरस्तु चक्राणां पद्मानां बन्धानां च योगचूडामण्युपनिषदोवगन्तव्यः । प्राक् षट्षष्टितमप्रकरणनिरूपणं चावलोकनीयम् ॥

इति धारणानिरूपणं नाम पञ्चसप्ततितमं प्रकरणम् ॥

अथ ब्रह्मरन्ध्राधःस्थितषट्चक्रेषु बीजमन्त्रस्य ध्यानं निरूपयति–ओंकार-

मणिपूरे ॥ ३ ॥ ईकारमनाहते ॥ ४ ॥ बिन्दुं विशुद्धयाम् ॥ ५ ॥ ध्वनिमाज्ञायाम् ॥ ६ ॥ सतारं मायां ब्रह्मरन्ध्रे ॥ ७ ॥ कुण्डलोर्ध्वनयनाधःस्थापनात्मकं सकृद् ध्यानम् ॥ ८ ॥ परजीवैकतां प्रति संविदुत्पत्तिः समाधिः ॥ ९ ॥

इति श्रीशाक्तदर्शने चतुर्दशाध्यायस्य चतुर्थः पादः ॥

चतुर्दशोध्यायः समाप्तः ॥

---

अथ पञ्चदशोध्यायः ॥

शान्तिमूलप्रकृतिमय आधारः ॥ १ ॥ नाभिचक्रं राजसम् ॥२॥ हृच्चक्रं सत्त्वम् ॥ ३ ॥ दृक्चक्रं तामसम् ॥४॥ सत्त्वोद्रिक्तगुणमयं ब्रह्मरन्ध्रम् ॥ ५ ॥ गणपतिराधारस्य ॥ ६ ॥ नाभेर्ब्रह्मा ॥७॥ हृदो विष्णुः ॥८॥ दृशो रुद्रः ॥९॥ शक्ती रन्ध्रस्य ॥१०॥ आधारे प्रणवः ॥ ११ ॥ नाभौ हकारः ॥ १२ ॥ हृदि रेफः ॥१३॥ दृशि ईकारः ॥ १४ ॥ ह्रींकारो रन्ध्रे ॥ १५ ॥ त्रिसाहस्रसंख्यान्तं वृत्तिराधारे ॥ १६ ॥ सहस्रं नाभौ ॥ १७ ॥ हृदि दृशि च ॥ १८॥

---

माधारे इति । ओंकाराक्षरस्य संपूर्णस्य मूलाधारे ध्यानं कुर्यात् । तत्स्थस्य च हकारस्य स्वाधिष्ठाने इति क्रमेण विशुद्धिचक्रे मकाररूपबिन्दुध्यानानन्तरमनुरणनात्मकध्वनेराज्ञाचक्रे ध्यानं कुर्यात् । ततोपि परं मायाध्यानं ब्रह्मरन्ध्रे कुर्यात् । तत्प्रभावतश्च कुण्डलिन्या ऊर्ध्वाधोनयनं कर्तुं ध्यानी प्रभवति समाधावधिकारी च भवति समाधिना सर्वश्रेष्ठं जीवैक्यं च साक्षात्करोति ॥

इति ध्याननिरूपणं नाम षट्सप्ततितमं प्रकरणम् ॥

अधुना षण्णां चक्राणां गुणान्देवता मन्त्रवर्णाक्षराणि जपसंख्यां निदर्श्य ध्यानं निरूपयति—शान्तिमूलेति । मूलप्रकृतिमयं गणपतिदेवताकं प्रणवस्वरूपं मूलाधारचक्रम् । तथैव नाभिचक्रं राजसं ब्रह्मदेवताकं हकाररूपम् । अत्र प्रकरणे स्वाधिष्ठानविशुद्धचक्रे न निदर्श्येते । तद्व्यतिरिक्तान्याधारनाभिहृद्दृक्चका-

पट्साहस्रं रन्ध्रे ॥ १९ ॥ वृत्तिरेषा मन्त्रयोगः ॥ २० ॥ एष एकः ॥ २१ ॥ ध्यानमेतत् ॥ २२ ॥ ऐक्यभावनं समाधिः ॥ २३ ॥ यमः सामान्यधर्मः ॥ २४ ॥ नियमो वर्णधर्मः ॥ २५ ॥ यथासुखमासनम् ॥ २६ ॥ मूलेन प्राणायामः ॥ २७ ॥ प्रत्याहारो मन्त्रसन्ध्या ॥ २८ ॥ धारणमर्चनम् ॥ २९ ॥ यन्त्रोत्तमबिम्बेषु ॥३०॥ हृदि च ॥ ३१ ॥ ध्यानं जपेन ॥ ३२ ॥ ऐक्यानुसंधानं समाधिः ॥ ३३ ॥ आभ्यन्तरपरो राजयोगी ॥ ३४ ॥ हठाद्याभ्यन्तरपरो हठयोगी ॥ ३५ ॥ बाह्याभ्यन्तरपरो मन्त्रयोगी ॥ ३६ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य प्रथमः पादः ॥

---

ण्यन्ते च ब्रह्मरन्ध्रं वर्ण्यते । एषु चक्रेषु तत्स्वरूपविषये प्रत्ययैकतानता ध्यानमिति भावः ॥

इति मन्त्रयोगनिरूपणं नाम सप्तसप्ततितमं प्रकरणम् ॥

अथ योगित्रयं व्याचष्टे तदङ्गतया च यमनियमप्रयोजनमाह— **यमः सामान्यधर्म इति** । अहिंसादयो, यमाः मनुष्यमात्रेण सर्वेण पालनीयाः । नियमाः प्रतिवर्णं किंचिद्भिन्नाः स्ववर्णाचारानुरूपं पालनीयाः । प्राणायामार्थं स्थैर्यसंपादकमासनं सर्वेषामावश्यकम् । **मूलेन प्राणायाम** इति । मूलमन्त्रं मनसि कृत्वा प्राणायामः कार्य इत्यर्थः । इन्द्रियनिग्रहरूपः प्रत्याहारो मन्त्रसन्ध्यारूपो मन्तव्यः । तथैव धारणमर्चनरूपं मन्वीत । तदर्चनरूपं चित्तधारणं यन्त्रेषु उत्तमबिम्बेषु च कार्यम् । ध्यानं जपेन कुर्यात् । सर्वस्यास्य परिणामः शक्त्यैक्यानुसंधानं, स एव समाधिः । एवं समन्त्रं योगाचरणं कुर्वन्नाभ्यन्तरा मानसीः सर्वाः क्रियाः प्राधान्येन कुर्वन् राजयोगीति कथ्यते । हठेन सर्वमेतच्छरीरेन्द्रियैः संपादयन् हठयोगीति कथ्यते । बाह्या आभ्यन्तराश्च द्वितया अपि योगक्रियाः कुर्वन् मन्त्रयोगीति कथ्यते ॥

इति मन्त्रपूर्वकाष्टाङ्गयोगनिरूपणं नाम अष्टसप्ततितमं प्रकरणम् ॥

## अथ द्वितीय पाद

दीक्षितः संस्कृतः ॥ १ ॥ नादीक्षितो मोक्षार्हः ॥ २ ॥ समयविशेपमहाविशेषज्ञानभेदात् पञ्च ॥ ३ ॥ मूलमन्त्रग्रहणं समयः ॥ ४ ॥ पूजाग्रहणं वैशेपी ॥ ५ ॥ होमादीनां महत् ॥ ६ ॥ सामान्यविशेपमहाविशेपभेदाज्ज्ञानदीक्षा त्रिधा ॥ ७ ॥ पञ्चभेदविचारात्मकं परोक्षं सामान्यम् ॥ ८ ॥ सिद्धान्तविचारजं प्रकाशात्मकं ज्ञानं विशेपम् ॥ ९ ॥ आत्मप्रकाशात्मकं महाविशेपम् ॥ १० ॥ निर्वाणमपरोक्षम् ॥ ११ ॥ नामनिष्ठकर्मनिष्ठमन्त्रनिष्ठज्ञाननिष्ठयोगनिष्ठेति दीक्षितः पञ्चधा ॥ १२ ॥ विशेपान्तं नामनिष्ठः ॥ १३ ॥ महाविशेपान्तं कर्मनिष्ठः ॥ १४ ॥ सामान्यज्ञानदीक्षान्तं मन्त्रनिष्ठः ॥ १५ ॥ विशेपं ज्ञाननिष्ठः ॥ १६ ॥ मन्त्रयोगी महाविशेपम् ॥ १७ ॥ हठयोगी च ॥ १८ ॥ निर्वाण राजयोगी ॥ १९ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य द्वितीयः पादः ॥

---

अथ पञ्चप्रकारकदीक्षितानाह—**दीक्षित सस्कृत** इति । गृहीतमूलशक्तिमन्त्रस्य दीक्षित इति सज्ञा । स एव शास्त्रकथितमार्गानुसारी मोक्षार्हो भवति । ते दीक्षिता शक्तिज्ञानसपादनसोपानपद्वीमारूढा यथाक्रममुत्तरोत्तर ज्यायास समयदीक्षित–वैशेपदीक्षित–सामान्यज्ञानदीक्षित – वैशेपज्ञानदीक्षित – निर्वाण दीक्षिताभिधा पञ्चविधा । पुनरपि तदङ्गीकृतज्ञानार्जनमार्गानुसारेण पञ्चविधा – **नामनिष्ठकर्मनिष्ठेति** । स्वनिष्ठयाधिगम्यमानानि तेषा स्थानानि कथयति— **विशेपान्तं नामनिष्ठ** इति । अत्र विशेपान्त ज्ञाननिष्ठ इति सुव्यक्तमपपाठ । तत्र योगनिष्ठाना मध्ये केवल राजयोगी एव निर्वाणाधिकारी भवति ॥

इति दीक्षितभेदनिरूपण नामैकोनाशीतितम प्रकरणम् ॥

अथ पञ्चदशे तृतीय पादः

वर्णसंस्कारपूतो भक्तिसंस्कारार्हः ॥ १ ॥ देवीमाहात्म्यग्रहणं भक्तिसंस्कारः ॥ २ ॥ उपास्यानं वा ॥ ३ ॥ विरजाकुङ्कुमतिलकपरं समयः ॥ ४ ॥ वारमासवात्सरवतद्वादशाब्दपञ्चसंस्काराद्विशेषः ॥ ५ ॥ मूलमन्त्रग्रहणं समयः ॥ ६ ॥ गणपतिसिद्धिबुद्धीनाममन्त्रैर्मूलमन्त्रः ॥७॥ अर्चन विशेषः ॥८॥ यन्त्रार्चनहोमतर्पणवैश्वदेवातिथ्यसंस्कारैर्महाविशेषः ॥ ९ ॥ मुक्ताप्रवालगजदन्तश्वेतार्केष्वेकमूर्तिपूजाग्रहणं महाविशेषः ॥१०॥ निरीक्षणसंस्कारेण पञ्चमवेदग्रहणं सामान्यज्ञानदीक्षा ॥ ११ ॥ इतिहासपुराणं पञ्चमम् ॥ १२ ॥ भागवतं पुराणम् ॥ १३ ॥ तरमौशनसम् ॥ १४ ॥ तमं रहस्यम् ॥ १५॥ उद्धारेण वेदानुमोदो विशेषज्ञानदीक्षा ॥ १६ ॥

---

अथ समयविशेषमहाविशेषादीन् व्याचष्टे कथ च सामान्यदीक्षितो निर्वाणदीक्षान्त गच्छति तन्निरूपयति—**वर्णसस्कारपूत** इति। गुरुभक्ति विना न किमपि साध्यमिति प्रथमतो भक्तेरावश्यकत्व कथयति—**देवीमाहात्म्येति**। देवीमाहात्म्यश्रवणेन भक्तिसस्कृतो गणपतिसिद्धिबुद्धिनाममन्त्ररूप मूलमन्त्र गृह्णाति। मूलमन्त्रग्रहणमेव समय इत्यभिधीयते गृहीतमूलमन्त्रश्च समयदीक्षिताभिधान प्राप्नोति। मन्त्रग्रहणानन्तर देव्या अर्चन विशेष इत्यभिधीयते। तत्रापि विशिष्टमर्चन यन्त्रार्चनादिसूत्रवर्णित महाविशेष इति कथ्यते। तदनन्तरमितिहासपुराणरूपस्य पञ्चमवेदस्याधिकारी भवति। गृहीतपञ्चमवेदश्च सामान्यज्ञानदीक्षितो भवति। **भागवत पुराणमिति**। भागवतशब्देन मुख्यतो देवीभागवत निर्दिश्यते। ततोपि ज्याय औशनस पुराणम्। ततोपि देवीरहस्यम्। अत्र केवलयो तरतमप्रत्यययो श्रेय श्रेष्ठार्थक प्रयोग सौत्र ॥

इति समयविशेषसामान्यज्ञानदीक्षानिरूपण नामाशीतितम प्रकरणम् ॥

सिद्धान्तब्रह्मविद्याग्रहणं वेदानुमोदः ॥ १७ ॥ षड् दर्शनानि षण्मुनिकृतानि वेदानुमोदितानि ॥ १८ ॥ तानि सिद्धान्तानि ॥ १९ ॥ भृगुणा गणेशदर्शनम् ॥ २० ॥ सौरं याज्ञवल्क्येन ॥ २१ ॥ शैवं गौतमेन ॥ २२ ॥ वैष्णवं शक्तिजेन ॥ २३ ॥ ब्राह्मं बादरेण ॥ २४ ॥ हयग्रीवेण शाक्तम् ॥ २५ ॥ हयग्रीवविद्या शाक्तसिद्धान्तदर्शनमिति ॥ २६ ॥ देवानुमोदेन गुहाप्रकाशज्ञानदीक्षा महावैशेषी ॥ २७ ॥ महावाक्यसिद्धान्तग्रहणं देवानुमोदः ॥ २८ ॥ महादेवाद्वा महासिद्धाद्वा ॥ २९ ॥ गुहाप्रकाशस्तेनैव ॥ ३० ॥ अपरोक्षज्ञानं निर्वाणदीक्षा ॥ ३१ ॥ बुद्ध्यारूढब्रह्मप्रकाशद्रष्टा तस्याधिकारी ॥ ३२ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य तृतीयः पादः ॥

---

अथ वेदानुमोदनामकविशेषज्ञानदीक्षां निरूपयति—**सिद्धान्तब्रह्मविद्याग्रहणं वेदानुमोद इति**। वेदानुमोदं व्याचष्टे—सिद्धान्तब्रह्मविद्याग्रहणमिति। शाक्तसिद्धान्तानुसारेण भृगुयाज्ञवल्क्यगौतमशक्तिजबादरहयग्रीवप्रोक्तानि अनुक्रमेण गणेशसौरशैववैष्णवब्राह्मशाक्ताभिधानानि षड् दर्शनानि वेदानुमोदितानीत्युच्यन्ते। तेषु हयग्रीवप्रोक्तं शाक्तं दर्शनं श्रेष्ठम् ॥

इति वेदानुमोदितदर्शननिरूपणं नामैकाशीतितम प्रकरणम् ॥

अथ देवानुमोदं निरूपयति—**देवानुमोदेनेति**। महादेवान्महासिद्धाद्वा तत्त्वमस्यादिमहावाक्यसिद्धान्तस्य याथार्थ्यग्रहणं देवानुमोदः। तेन गुहाहितस्य शक्तिरूपब्रह्मणः साक्षात्कारो भवति। तथा च काठकोपनिषदि—'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (कठोपनिषद् २।१२) इति। गुहाप्रकाशादनन्तरं शक्तेः प्रत्यक्षं ज्ञानं भवति। यस्यैतज्ज्ञानं भवति स निर्वाणदीक्षित इत्युच्यते ॥

इति देवानुमोदितनिरूपणं नाम द्व्यशीतितमं प्रकरणम् ॥

अथ चतुर्थः पादः

**निर्वाणदीक्षितापरोक्षज्ञानी मुक्तः ॥ १ ॥ राजयोगिनः कदाचिद् व्यवहारः ॥ २ ॥ ऐच्छिकं कर्म ॥ ३ ॥ हठयोगिनो व्यावहारेपि ॥ ४ ॥ मन्त्रयोगिनो व्यावहारेपि नित्यम् ॥ ५ ॥ निष्ठत्रयैर्बाह्यकर्म ॥ ६ ॥ महावैशेषाधिकारो ज्ञाननिष्ठस्य ॥ ७ ॥ नामनिष्ठो द्विधा ॥ ८ ॥ उभयपूतैकपूतेति ॥ ९ ॥ उभयपूतनामनिष्ठस्य सामान्यजपपूजने च ॥ १० ॥ दीक्षात्रयपूतः कर्मनिष्ठः ॥ ११ ॥ मन्त्री च ॥ १२ ॥ विशेषार्चनपरः कर्मनिष्ठः ॥ १३ ॥ विशेषजापको मन्त्रनिष्ठः ॥ १४ ॥ होमादीनि नित्यत्वे कर्मठस्य ॥ १५ ॥ मन्त्रिणस्तदङ्गानि ॥ १६ ॥ मन्त्रिणो विशेषदिवसेषु विशेषपूजा ॥ १७ ॥ होमतर्पणाद्याढ्या वैशेषी पूजा ॥ १८ ॥ महावैशेषदीक्षितेन प्रतिमायन्त्रशिलाः पूज्या नित्यम् ॥ १९ ॥**

---

अथ दीक्षितविशेषाणां कर्माणि निरूपयति—**निर्वाणदीक्षितेति** । निर्वाणदीक्षितेषु राजयोगिनः ऐच्छिकमेव सर्वं कर्म । हठयोगिना व्यावहारिकं कर्म कार्यमेव । मन्त्रयोगिना तु नित्यमेव कर्मावश्यं कर्तव्यम् । **निष्ठत्रयैरिति** । निष्ठत्रयशब्देनात्र नामनिष्ठकर्मनिष्ठमन्त्रनिष्ठा उच्यन्ते । एतेषां सर्वं बाह्यं कर्म पूजनजपार्चनादि नित्यमेव । ज्ञाननिष्ठस्य तु महावैशेषदीक्षितस्य यद्विहितं कर्म तत्सर्वं कर्तव्यतया वर्तते । तत्र निष्ठत्रयेण यत्कर्तव्यं कर्म तत्सप्रपञ्चं प्रतिपादयति—**नामनिष्ठो द्विधेति** । तत्रोभयपूतनामनिष्ठस्य सर्वं सामान्यकर्मावश्यकमेव । कर्मनिष्ठस्य विशेषार्चनजपपूजनानि कर्तव्यानि । मन्त्रनिष्ठस्य ततोपि विशेषः । विशेषदिवसेषु विशेषजपपूजाहोमार्चनानि कर्तव्यानि । ज्ञाननिष्ठस्य तु जपार्चनैः सहोपनिषद्गीतापठनानि कर्तव्यानि । ज्ञाननिष्ठस्य तु कर्मविषये पूर्णं स्वातन्त्र्यम् । न किमपि कर्म तस्यावश्यकतयापतति ॥

इति पञ्चविधदीक्षितकर्मनिरूपणं नाम त्र्यशीतितमं प्रकरणम् ॥

मन्त्रिणो शिलां विना द्रव्यं वापि ॥ २० ॥ जपार्चनाभ्यामुपनिषद्गीता-पठनार्थविचारो ज्ञाननिष्ठस्य ॥ २१ ॥ विशेषदिवसेषु विशेषपूजा ॥ २२ ॥ जपश्चापि ॥ २३ ॥ मन्त्रयोगिनो मन्त्रयोगः ॥ २४ ॥ उत्तमबिम्बार्चनं च ॥ २५ ॥ अन्यान्यैच्छिकानि ॥ २६ ॥ विशेष-दिवसेष्वपि मन्त्रयोग एव ॥ २७ ॥ व्यावहारे हठयोगिनोपि जप-पूजने च ॥ २८ ॥ राजयोगिन ऐच्छिकम् ॥ २९ ॥ न ज्ञानिनः ॥ ३० ॥ ज्ञानी स्वतन्त्रः ॥ ३१ ॥

इति श्रीशाक्तदर्शने पञ्चदशाध्यायस्य चतुर्थः पादः ॥

॥ पञ्चदशाध्यायः समाप्तः ॥

---

अथ षोडशोध्यायः ॥

निर्वाणदीक्षितो ब्राह्मणः ॥ १ ॥ वैशेषज्ञानदीक्षितः ॥ २ ॥ सामान्यज्ञानदीक्षान्तं वैश्यः ॥ ३ ॥ अदीक्षितः शूद्रः ॥ ४ ॥ अन्तःकरणवृत्त्यामारूढब्रह्मप्रकाशो ज्ञानम् ॥ ५ ॥ तद्युतो बटुः ॥ ६ ॥ नष्टावरणो गृही प्राज्ञमयः ॥ ७ ॥ नष्टकारणदेहः साक्षात्साक्षि-मयो वनी ॥ ८ ॥ ब्रह्मीभूतः संन्यासी ॥ ९ ॥ विज्ञेषज्ञान-

---

अथ दीक्षितानां वर्णचतुष्टयं तथैवाश्रमचतुष्टयं निरूपयाति । तत्र निर्वाण-दीक्षित एव ब्राह्मणः । वैशेषज्ञानदीक्षितः क्षत्रियः । इतरे दीक्षिता वैश्याः । अदीक्षितस्तु शूद्रः । तत्र निर्वाणदीक्षितस्य दीक्षाब्राह्मणस्य चत्वार आश्रमाः । ब्रह्मज्ञानोपलक्षितोः बटुरूपः प्रथमाश्रमी । अज्ञाननाशोपलक्षितो द्वितीया-श्रमी गृही । कारणदेहनाशोपलक्षितस्तृतीयाश्रमी वानप्रस्थः । प्राप्तब्रह्मस्वरूप-श्चतुर्थाश्रमी संन्यासी । क्षत्रियदीक्षितस्यापि चतुर आश्रमानभिधत्ते – विशेष-ज्ञानदीक्षितः क्षत्रबटुरिति । एवमेव वैश्यदीक्षितस्यापि चतुर आश्रमान्निरूप-

दीक्षितः क्षत्रबटुः ॥ १० ॥ देवानुमोदसंस्कृतो गृही ॥ ११ ॥ वैशेषिकज्ञानदीक्षितः क्षत्रवनी ॥ १२ ॥ सिद्ध्या यतिः ॥ १३ ॥ समयदीक्षितो वैश्यबटुः ॥ १४ ॥ वैशेषी वैश्यगृही ॥ १५ ॥ महद्वनी ॥ १६ ॥ सामान्यज्ञानदीक्षितो वैश्ययतिः ॥ १७ ॥ न वर्णविप्रो ब्राह्मणः ॥ १८ ॥ न वर्णयतिर्यतिः ॥ १९ ॥

इति श्रीशाक्तदर्शने षोडशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

सावित्रीग्रहणं वर्णदीक्षा ॥ १ ॥ आधानं वैशेषी ॥ २ ॥ सन्ध्यासूक्तमसंख्यामातृजपग्रहणं महावैशेषी ॥ ३ ॥ अष्टसाधनैर्ब्रह्मविचारो ज्ञानदीक्षा ॥ ४ ॥ निदिध्यासो निर्वाणम् ॥ ५ ॥

---

यति—**समयदीक्षितो वैश्यबटुरिति**। जातिब्राह्मणाद् दीक्षितब्राह्मणस्य श्रैष्ठ्यमाह — **न वर्णयतिरिति**। न जात्या ब्राह्मणो ब्राह्मणः। दीक्षितब्राह्मण एव वस्तुतो ब्राह्मणः। एवमेव न केवलं जात्या गृहीततदाश्रमत्वेन वा यतिः। किंतु दीक्षासंपन्न एव यतिलक्षणोपेतो यतिः॥

इति दीक्षितचातुर्वर्ण्यनिरूपणं नाम चतुरशीतितमं प्रकरणम् ॥

अथ मतदीक्षापञ्चकभिन्नत्वेन वर्णदीक्षापञ्चकं व्याचष्टे — **सावित्रीग्रहणमिति**। गायत्रीमन्त्रस्य गुरोः सकाशाद् ग्रहणं वर्णदीक्षा। अग्न्याधानं वैशेषी दीक्षा। गायत्रीमन्त्रस्योत्तमसंख्यको जपो महावैशेषी दीक्षा। तदनन्तरं यमदमादिसाधनसहकृत उपनिषद्ब्रह्मसूत्रादिसिद्धान्तविचारो ज्ञानदीक्षा। अनन्तरं ब्रह्मनिदिध्यासो निर्वाणदीक्षा। **पारमाद्वर्णीति**। वर्णिशब्देन ब्रह्मव्रतचारीत्युच्यते। पारमान्नाम परमतत्त्वसंबन्धिनो व्रतादसौ ब्रह्मनिदिध्यासपरो वर्णीत्युच्यते। वस्तुतस्तु मतदीक्षिता एव वर्णिनः इति। *मतदीक्षितो वर्णिन इति*। मतदीक्षिता वर्णिन इति शुद्धः पाठः॥

इति वर्णदीक्षितनिरूपणं नाम पञ्चाशीतितमं प्रकरणम् ॥

पारमाद्वर्णी ॥ ६ ॥ मतदीक्षितो वर्णिनः ॥ ७ ॥ न पूजयेददीक्षितं दीक्षितः ॥ ८ ॥ दीक्षितमदीक्षितो विशेषेण ॥ ९ ॥ क्रमाद्दीक्षितेषु ॥ १० ॥ दीक्षितैरपि न त्याज्या वर्णधर्माः ॥ ११ ॥ वर्णनित्येषु नित्यनित्यम् ॥ १२ ॥ न काम्यम् ॥ १३ ॥ निमित्ते नैमित्तिकं च ॥ १४ ॥ वर्णकर्मस्वपि न दीक्षितैः पूज्या अदीक्षिताः ॥ १५ ॥ यदि मोहादुभावपि यातनाम् ॥१६॥ शाक्तैः शाक्तगाणपौ ॥१७॥ नापूज्याः सौरवैष्णवशाम्भवाः ॥ १८ ॥ शाक्तगाणपालाभे पूज्याः ॥ १९ ॥ वरा वर्णिभ्यः ॥ २० ॥ सर्वालाभे वर्णिनम् ॥ २१ ॥ न कदापि तान्त्रिकान् ॥ २२ ॥

इति श्रीशाक्तदर्शने षोडशाध्यायस्य द्वितीयः पादः ॥

---

अथ दीक्षितानां परस्परं पूजाप्रकारः कथ्यते—न पूजयेदिति । मतदीक्षितो न कदाप्यगृहीतदीक्षं पूजयेत् । दीक्षितमदीक्षित इति । अत्र पूजयेदित्यध्याहारः । अदीक्षितेन दीक्षितः सविशेषं पूजनीय इत्यर्थः । क्रमाद्दीक्षितेष्विति । दीक्षितेषु नामनिष्ठादिषु अवरेण नामनिष्ठादिना कर्मनिष्ठादिः परः पूजनीयो न व्युत्क्रमेण कर्मनिष्ठेन नामनिष्ठ इति । दीक्षितैरपि । वर्णधर्माः सर्वदीक्षितैः पालनीयाः नित्यानि नैमित्तिकानि च कर्माणि सदैवाचरितव्यानि । काम्यानि न कार्याणि । वर्णविहितकर्मवेलायामपि न दीक्षितोऽदीक्षितं पूजयेत् । यदा कदाचित्स पूजयेत्तर्हि द्वावपि कष्टं प्राप्नुयाताम् । शाक्तैः शाक्तगाणपाविति । प्राक् (अ. १५ पा. ३) कथितेषु वेदानुमोदितसिद्धान्तानुसारिषु मध्ये शाक्तगाणपा इतरेभ्यः श्रेयांसः । ते परस्परं पूजयेयुः । इतरे नाम सौरवैष्णवशैवास्तैरपूजनीया इति न । किंतु स्वपक्षीयालाभे पूजनीयाः । तत्र हेतुमाह — वरा वर्णिभ्य इति । वर्णव्रतानुसारिभ्य इतरेभ्यः सामान्यजनेभ्यः सकाशात्सौरवैष्णवशैवाः सर्वदा श्रेयांस एव । शाक्तगाणपैरितरालाभे आवश्यकं चेद्वर्णव्रतचारी जनः पूजनीयः परं न कदापि तान्त्रिकः पूजनीयः । तस्य वामाचारकौलाचाराद्यनुसारित्वात् ।

इति दीक्षितस्थाननिरूपणं नाम षडशीतितमं प्रकरणम् ॥

अथ तृतीयः पादः ॥

दीक्षितानां चिह्नं कुङ्कुमम् ॥ १ ॥ प्रवालेन ॥ २ ॥ विहितौ भस्मगन्धे च ॥ ३ ॥ मन्त्रसंध्यामुपासीत ॥ ४ ॥ अहरहः ॥ ५ ॥ कीर्तनार्चने नामनिष्ठेन ॥ ६ ॥ अशुद्धिष्वपि कीर्तनम् ॥ ७ ॥ नार्चनम् ॥ ८ ॥ ऋत्विजा ॥ ९ ॥ कर्मनिष्ठेन वर्णसंध्याजपेन मतसंध्याजपहोमतर्पणवैश्वदेवातिथ्यानि नित्यम् ॥ १० ॥ अशुद्धिषु वर्णसंध्याजपवन्मतसंध्याजपमेव स्वयम् ॥ ११ ॥ ऋत्विजार्चनम् ॥ १२ ॥ अलाभे स्वयमेवार्द्रवाससा ॥ १३ ॥ न कार्याणि होमादीनि ॥ १४ ॥ तथैव मन्त्रनिष्ठोपि ॥ १५ ॥ वर्णसंध्याजपवन्मतसंध्याजपार्चनानि नित्यम् ॥ १६ ॥ जपेन्नित्यं दशाङ्गानि ॥ १७ ॥ कवचहृदयसहस्रनामस्तवराजलहरीवेदपादस्तवावरणस्तवगीताथर्वशीर्षसूक्तान्यङ्गानि ॥ १८ ॥ अशुद्धयां नाङ्गानि ॥ १९ ॥ ज्ञाननिष्ठेनाप्येवमेव ॥ २० ॥ अशुद्धिष्वपि स्वयमेवार्चनं मन्त्रयोगी ॥ २१ ॥

इति श्रीशाक्तदर्शने षोडशाध्यायस्य तृतीयः पादः ॥

---

अथ दीक्षितकर्तव्यान्याह — दीक्षितानां चिह्नमिति । भ्रुवोर्मध्ये ललाटे कुङ्कुमधारणं दीक्षितानां विशिष्टं चिह्नम् । प्रवालेन संमिश्रं तत्कुर्यात् । भस्मगन्धे अपि विहिते एव । प्रतिदिनं मन्त्रसंध्योपासना कर्तव्या । कीर्तनार्चने इति । नामनिष्ठेन देव्याः संकीर्तनमर्चनं च सदा कर्तव्यम् । कर्मनिष्ठेति । कर्मनिष्ठेन वर्णसंध्यागायत्रीजपेन सह मतसंध्याजपादि कर्तव्यम् । देहाशुद्धौ वर्णसंध्याजपवन्मतसंध्याजपः स्वयं कार्यः । देव्यर्चनं न स्वतः किं तु ऋत्विग्द्वारा । कवचहृदयेति । देवीकवचं, देवीहृदयं, देवीसहस्रनाम, स्तवराजः, सौन्दर्यलहरी, वेदपादस्तवः, आवरणस्तवः, गीता, अथर्वशीर्षम्, अथर्वस्तवः इति दशाङ्गानि ॥

इति दीक्षितकर्मनिरूपणं नाम सप्ताशीतितमं प्रकरणम् ॥

*अथ चतुर्थः पादः ॥*

शुक्रवारे नक्तपूजा ॥ १ ॥ निवेदनं चार्चनेन ॥ २ ॥ विशेपार्चनं पर्वनवम्योः ॥ ३ ॥ होमादीनि विशेपाङ्गानि ॥ ४ ॥ नवरात्रिपु महाविशेषी ॥ ५ ॥ कङ्कणबन्धात्परमशुद्ध्यागमने नाशुद्धिः ॥ ६ ॥ संकल्पात्परं मासपूजादिपु ॥ ७ ॥ नित्यपूजने च ॥ ८ ॥ *अम्बायज्ञानि शतधा ॥ ९ ॥ दीक्षितो यथाशक्ति ॥ १० ॥ निर्धूपस्काः* सधूपस्काश्च ॥ ११ ॥ सधूपस्काः कामदाः ॥ १२ ॥ निर्धूपस्काश्चित्तशुद्धिद्वारा मुक्तिदाश्च ॥ १३ ॥ पुरश्चर्यादीन्यपि यज्ञानि ॥ १४ ॥ सहस्रगुणितं ज्ञानयज्ञम् ॥ १५ ॥

इति श्रीशाक्तदर्शने पोडशाध्यायस्य चतुर्थः पादः ॥

पोडशोध्यायः समाप्तः ॥

---

अथ सप्तदशोध्यायः ॥

ब्राह्मणा द्विधा ॥ १ ॥ अदीक्षिताः कर्मब्राह्मणाद्याः ॥ २ ॥ ज्ञानब्राह्मणाद्या दीक्षिताः ॥ ३ ॥ द्विपदेपु सामान्यधर्महीनाः पशवः ॥ ४ ॥ सामान्येपु सत्त्वपरा ब्राह्मणाः ॥ ५ ॥ सत्त्वराजसाः

---

अथ दीक्षितकर्तव्याः पूजनार्चनविधयस्तत्कालविशेषाश्च कथ्यन्ते — शुक्रवारे इति । अम्बायज्ञानि शतधेति । शतचण्डीजपादयस्त्वत्राभिप्रेताः । निर्धूपस्का इति । निर्धूपकाः सधूपका इति साधुः पाठः । सौत्रः सुडागमः । ज्ञानयज्ञमिति । सौत्रं नपुंसकत्वम् ।

इति दीक्षितकर्तव्यपूजानिरूपणं नामाष्टाशीतितमं प्रकरणम् ॥

अथ दीक्षितादीक्षितमूलं ब्राह्मणद्वैविध्यमाह — *कर्मणा ब्राह्मणा* जातिब्राह्मणाख्याः । तद्भिन्ना गृहीतदीक्षा ज्ञानसामर्थ्याद्दीक्षितब्राह्मणा इत्युच्यन्ते । कर्मब्राह्मणज्ञानब्राह्मणेभ्य इतरे सत्त्वशीला नराः सामान्यब्राह्मणा इत्युच्यन्ते । सत्त्वशीला राजसाः क्षत्रियाः, केवलरजोगुणयुक्ता वैश्यास्तमोगुणाश्च शूद्राः

क्षत्त्रियाः ॥ ६ ॥ राजसा वैश्याः ॥ ७ ॥ तामसाः शूद्राः ॥ ८ ॥ सामान्यवर्णिनश्चैते ॥ ९ ॥ तेभ्यः कर्मवर्णिनः ॥ १० ॥ तेभ्यो ज्ञानवर्णिनः ॥ ११ ॥ न ज्ञानवर्णिनस्तन्त्रदीक्षिताः ॥ १२ ॥ कर्मवर्णिषु वेदानर्हास्तान्त्रिकीम् ॥ १३ ॥ कर्मवैश्योपि वेददीक्षार्हः ॥ १४ ॥ न कर्मशूद्रः ॥ १५ ॥ निर्वाणदीक्षितकर्मवैश्योपि ज्ञानब्राह्मण एव ॥ १६ ॥ वैशेषदीक्षितकर्मब्राह्मणो ज्ञानवैश्यः ॥१७॥ ज्ञानवर्णज्ञानविषये कर्मवर्णक्रमेण ॥ १८ ॥

इति श्रीशाक्तदर्शने सप्तदशाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

न कर्मवर्णत्रयजास्तान्त्रिकार्हाः ॥ १ ॥ संकरजाः ॥ २ ॥ सव्यापसव्यभेदात् ॥ ३ ॥ वामिनो निन्द्याः ॥ ४ ॥ मधुमांसबलिभगार्चनपरा वामिनः ॥ ५ ॥ साम्यास्ते वर्णशूद्रैश्च ॥ ६ ॥ मधु-

---

सत्त्वादिगुणयोगमूलचातुर्वर्ण्यात्कर्ममूलकचातुर्वर्ण्यं श्रेयस्ततोपि ज्ञानमूलकं चातुर्वर्ण्यं श्रेयः। सर्वश्रेष्ठं ज्ञानमूलकं चातुर्वर्ण्यम्। तन्त्रमार्गानुसारिणो गृहीतदीक्षा अपि न ज्ञानमूलके चातुर्वर्ण्ये कदापि स्थानं लभन्ते। केवलं वेदानधिकारी तान्त्रिकीं दीक्षां गृह्णाति। तत्र च दक्षिणमार्गमवलम्ब्य सम्यग्विहिताचारो भक्तिमार्गप्राप्यं कार्यलोकवासं प्राप्नोति। कर्मवैश्योपीति। सर्वे त्रैवर्णिनो दीक्षार्हाः। कर्मवर्णादेकया कक्षया द्वाभ्यां वा कक्षाभ्यां परं वर्णमवाप्तज्ञानो दीक्षितो लभते तथैवानवाप्तज्ञानदीक्षस्त्वेकां हीनां कक्षां लभते। तदाह—निर्वाणदीक्षितेति ॥

इति कर्मवर्णज्ञानवर्णसंबन्धनिरूपणं नामैकोननवतितमं प्रकरणम् ॥

अथ वाममार्गस्य दुष्टत्वमाह—न कर्मवर्णत्रयजा इति। वर्णत्रयजा न तन्त्रमार्गं स्वीकुर्युः। शूद्राणां संकरजानां वा स मार्गः। तन्त्रमार्गोपि द्वेधा दक्षिणवामभेदात्। वाममार्गस्य सर्वथा निन्द्यत्वमाह—वामिनो निन्द्या इति।

मांसवर्जितशूद्रा वरास्तेभ्यः ॥ ७ ॥ प्रच्छन्ना वामिनः ॥ ८ ॥ अशुद्धश्रैष्ठ्यवादिनः ॥ ९ ॥ मद्यं तीर्थम् ॥ १० ॥ शुद्धं मांसम् ॥ ११ ॥ मद्यपात्रं पद्मम् ॥ १२ ॥ रक्तलशुनं न्यासः ॥ १३ ॥ श्वेतं शुक्रः ॥ १४ ॥ दीक्षितो मद्यकर्ता ॥ १५ ॥ भैरवीचक्रस्थ-चाण्डालाद्या अपि ब्राह्मणाः ॥ १६ ॥ जारो योगी ॥ १७ ॥ योगिनी जारिणी ॥ १८ ॥ रजस्वला पूजनीया ॥ १९ ॥ एवमादि-सिद्धान्तपरा वामिनः निन्द्याः ॥ २० ॥

इति श्रीशाक्तदर्शने सप्तदशाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः ॥

वेदाविरोधमार्गेणापि तन्त्रदीक्षिता न ज्ञानमार्गिणः ॥ १ ॥ भक्तिमार्गिण इति ॥ २ ॥ वर्णधर्माः कर्मब्राह्मणवत् ॥ ३ ॥ उपासनं केवलं तन्त्रमार्गात् ॥ ४ ॥ दक्षिणमार्गिण इति ॥ ५ ॥ दीक्षाक्रमेण तेषु श्रेष्ठत्वम् ॥ ६ ॥ कार्यलोकवास एव परा मुक्तिः ॥ ७ ॥ भोगान्ते जन्म चापि ॥ ८ ॥ न ते महाशाक्ताः ॥ ९ ॥ श्रीशाक्ता

---

मधुमांसेति सर्वं स्पष्टार्थम् । मधुमांसवर्जिताः शूद्रा अपि वाममार्गिभ्यो गरीयांसः । मद्यं तीर्थमिति । वदन्तीति शेषः । श्वेतं शुक्र इति न स्पष्टम् ॥

इति वाममार्गदुष्टत्वनिरूपणं नाम नवतितमं प्रकरणम् ॥

अथ तान्त्रिकेषु दक्षिणमार्गावलम्बिनां स्थानमाह—वेदाविरोधेति । तन्त्रदीक्षिता यद्यपि वेदाविरुद्धं दक्षिणमार्गमनुसरेयुस्तथापि न ते मोक्षार्हा भवन्ति । उपासनफलत्वेन कार्यलोकवासपर्यन्तमेव ते गच्छेयुः । ततश्च क्षीण-पुण्याः पुनरपि मर्त्यलोकं विशेयुः । न ते महाशाक्ता इति । शाक्तदर्शनानु-सारिणोप्येते तन्त्रमार्गावलम्बनेन दोषेण न ते महाशाक्ताः कदापि भवेयुः । श्रीशाक्ता इति चेति । श्रीशाक्ता इत्येव तेषां सर्वाधिका संज्ञा स्यात् । न ते इतिपदयोरनुवृत्त्या न ते श्रीशाक्ता इत्यपि वक्तुं शक्यन्ते इत्यपि सूत्रार्थः

इति च ॥ १० ॥ विद्या पञ्चदशी ॥ ११ ॥ नाधिकारो ब्रह्मविद्यायाम् ॥ १२ ॥ केवलं भक्तिसूत्रे ॥ १३ ॥ कर्मब्राह्मणा वरास्तेभ्यः ॥ १४ ॥ वामोत्तरा दीक्षितादीक्षितभेदात् शाक्ताः श्रेष्ठयाः क्रमशः ॥ १५ ॥ अद्वैतं ब्रह्मविद्यामार्गमेव ॥ १६ ॥

इति श्रीशाक्तदर्शने सप्तदशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः

प्रकृतिनित्यत्वान्न सांख्यम् ॥ १ ॥ देहात्मबोधकं विरुद्धम् ॥ २ ॥ इन्द्रियात्मकबोधकमपि ॥ ३ ॥ प्राणो वायुरूपत्वान्न हैरण्यगर्भम् ॥ ४ ॥ अनित्यत्वान्मनसो न पाञ्चरात्रम् ॥ ५ ॥ नात्मा क्षणिकत्वान्निन्द्यं बौद्धम् ॥ ६ ॥ आत्माचेतनरूपत्वान्न शून्यम्

---

स्यात् । विद्या पञ्चदशीति । तान्त्रिकदर्शनं दक्षिणमार्गपरं वाममार्गपरं वा पुराणान्तर्गतत्वात्पञ्चदशी विद्येति वर्तते । एतेषां तान्त्रिकाणां नाधिकारो ब्रह्मविद्यायाम् । भक्तिपरा एते जनाः । भक्त्या यत्साध्यं कार्यलोकवासरूपं तदेवैतेषाम् । कर्मब्राह्मणास्तेभ्यो गरीयांसः । वामोत्तरेति । वाममार्गपरा उत्तरमार्गपरा नाम दक्षिणमार्गपरा अदीक्षिता अनन्तरं दीक्षिता इति क्रमशः श्रेष्ठाः सर्वे शाक्तत्वेन संबोध्या अपि । सर्वैरपि मोक्षार्थे अद्वैतमार्ग एव स्वीकार्यः ॥

इति शाक्तप्रभेदनिरूपणं नामैकनवतितमं प्रकरणम् ॥

अथ सांख्यादिदर्शनानि तत्स्थितप्रमुखदोषनिदर्शनपूर्वकं दूषयति—प्रकृतिनित्यत्वादिति । सांख्यमते प्रकृतिर्नित्या । वस्तुतस्तु प्रकृत्याः शक्तेः प्रादुर्भावान्न सांख्यं प्रामाणिकम् । तद्वदेव देह एव आत्मेति वदन्तोऽपरेऽपि इन्द्रियाण्येवात्मेति वदन्तश्चार्वाका अपि न ग्राह्याः । प्राण एव मुख्यं तत्त्वमिति हैरण्यगर्भाणां मतम् । वस्तुतस्तु प्राणो वायुरूप एव न कथमपि स आत्मा । अतो हैरण्यगर्भमतमपि न प्रामाणिकम् । पाञ्चरात्राणां मते प्रद्युम्ननाम्नो व्यूहान्मनस उत्पत्तिरतस्तदपि न ग्राह्यम् । बौद्धमते नैवात्मेति न किंचित् प्रामाणिकं तत्त्वम् । क्षणिका विज्ञानसंततिरेवात्मा स्यादतो बौद्धमतमपि न प्रामाणिकम् ।

॥ ७ ॥ अन्तःकरणजन्यत्वान्न योगम् ॥ ८ ॥ हयग्रीवशासनं सिद्धान्तम् ॥ ९ ॥

इति श्रीशाक्तदर्शने सप्तदशाध्यायस्य चतुर्थः पादः ॥

सप्तदशोऽध्यायः समाप्तः ॥

---

अथाष्टादशोऽध्यायः ॥

वैदिकविद्याप्रस्थानान्यष्टादश ॥ १ ॥ अशीत्युत्तरशताधिक-

---

शून्यवादिनां बौद्धानामपि न मतं ग्राह्यम्। यतस्तेषां मते सर्वं शून्यम्। आत्मापि जडः शून्य एव। तथा च सिद्धान्तबिन्दुदशश्लोक्यां श्रीशंकराचार्याः— 'न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा' इति। न **योगमिति**। योग नाम पातञ्जलं मतमपि न स्वीकार्यम्। यतोऽन्तःकरणनियमनादेव सर्वं सिध्यतीत्येतन्मतेन सर्वस्यान्तःकरणजन्यत्वात्। हयग्रीवशासनमेव सिद्धान्तः। सिद्धान्तमिति सौत्रं नपुंसकत्वम्।'

इति सांख्यादिमतनिरासो नाम द्विनवतितमं प्रकरणम् ॥

अथ वैदिकविद्याप्रस्थानानि प्रदर्शयति—वैदिकविद्येति। एतान्यष्टादश प्रस्थानानि चत्वारो वेदाः, षडङ्गानि, आयुर्वेदधनुर्वेदगान्धर्ववेदौशनसी विद्येति चत्वारः, इतिहासपुराणानि, काणाद, गौतमं मीमांसा चेत्यग्र एवास्मिन्नध्याये स्फुटीभविष्यति। सीतोपनिषदि तु चत्वारो वेदाः, षडङ्गानि, न्यायः, मीमांसा, धर्मशास्त्रम्, इतिहासपुराणम्, वास्तुवेदः, धनुर्वेदः, गान्धर्वः, आयुर्वेदः इति मिलित्वाष्टादश विद्या दृश्यन्ते। अशीत्युत्तरेति। अत्राशीत्युत्तरैकादशशतमिताः (११८०) वेदशाखा निर्दिष्टाः। महाभाष्ये तु—'एकशतमध्वर्युशाखाः (१०१) एकविंशतिधा बाह्वृच्यम् (२१) सहस्रवर्त्मा सामवेदः (१०००), नवधाथर्वणो वेदः (९) इति एकत्रिंशदधिकैकादशशतमिताः (११३१) निदर्शिताः। सीतोपनिषदि तु—एकविंशतिशाखायामृग्वेदः परिकीर्तितः। शतं च नव शाखासु यजुषामेव जन्मनाम्। साम्नः सहस्रशाखाः स्युः पञ्च शाखा अथर्वणः' इति

सहस्रा वेदशाखाः ॥ २ ॥ उपनिषदश्च ॥ ३ ॥ मरीचिधन्वन्तर्यश्विनावायुर्वेदकर्तारः ॥ ४ ॥ तदन्तर्गतं कामशास्त्रम् ॥ ५ ॥ स्वायंभुवमरीचिविश्वामित्रा धनुर्वेदस्य ॥ ६ ॥ भरतो गान्धर्वस्य ॥ ७ ॥ उशनाद्यास्तुरीयस्य ॥ ८ ॥ वेदलक्षणज्ञानदा शीक्षा ॥ ९ ॥ कर्तारो ब्रह्मपाणिन्याद्याः ॥ १० ॥ शुद्धज्ञानदं वैदिकपदानां शाब्दम् ॥ ११ ॥ कर्तारो नव ॥ १२ ॥ पिङ्गलश्छन्दोबोधकस्य ॥ १३ ॥ अपूर्वपदार्थबोधकं निरुक्तम् ॥ १४ ॥ व्यासाद्याः कर्तारः ॥ १५ ॥ कालज्ञानबोधकं ज्यौतिषम् ॥ १६ ॥ आदित्याद्याः ॥ १७ ॥ वेदोक्तकर्मोपास्तिप्रयोगबोधकः कल्पः ॥ १८ ॥ जैमिन्याद्याः प्रवर्तकाः ॥ १९ ॥ गर्गो गणपतेः ॥ २० ॥ उशनाः शाक्तस्य ॥ २१ ॥ दधीचिगौतमकुम्भजाः शैवस्य ॥ २२ ॥ अगस्त्यः सौरस्य ॥ २३ ॥ दाल्भ्यो वैष्णवस्य ॥ २४ ॥ कल्पकर्तारः ॥ २५ ॥ पञ्चैते उपासनाकाण्डकल्पाः ॥ २६ ॥ अष्टाध्यायिनः ॥ २७ ॥

इति श्रीशाक्तदर्शने अष्टादशाध्यायस्य प्रथमः पादः ॥

---

पञ्चत्रिंशदधिकैकादशशतमिता (११३५) दृश्यन्ते। **मरीचिधन्वन्तरीति**। कामशास्त्रमायुर्वेदान्तर्गतत्वेनात्र दर्शितम्। **शाब्दमिति**। शाब्दं नाम व्याकरणम्। तस्यात्र नव कर्तारः प्रोक्ताः। 'इन्द्रश्चन्द्रः काशकृत्स्नापिशलीशाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः' इत्यष्टैव वैयाकरणकुलेषु व्याकरणकर्तृत्वेन प्रसिद्धाः। कदाचित् कातन्त्रव्याकरणकर्ता शर्ववर्मा नवमत्वेनाभिप्रेतः स्यात्। **व्यासाद्या इति**। अत्र व्यासस्य निरुक्तकर्तृत्वेनोल्लेखः क्रियते न प्रसिद्धस्य यास्कस्य। **आदित्याद्या**। इति आदित्यशब्देनात्र सूर्यसिद्धान्तकर्ताभिप्रेतः स्यात्। कदाचिज्ज्योतिषशास्त्रमूलभूतसूर्यदेवताप्यभिप्रेता स्यात् ॥

इति वेदवेदाङ्गनिरूपणं नाम त्रिनवतितमं प्रकरणम् ॥

अधुना कल्पं नाम वेदाङ्गं विवृणुते। **वेदोक्तकर्मोपास्तीति**। वेदोक्तं यत्कर्म तस्य योपासना प्रयोगश्च तयोर्बोधकः कल्पः इति कल्पोऽत्र व्याख्यायते।

अथ द्वितीयः पादः

शाक्तं कल्पमौशनसम् ॥ १ ॥ चतुर्विंशतिसंस्कारैर्दीक्षाक्रम-बोधकः प्रथमाध्यायः ॥ २ ॥ नित्यकृत्यक्रमबोधको द्वितीयः ॥ ३ ॥ नैमित्तिकस्तृतीयः ॥ ४ ॥ नानाविधयज्ञबोधकस्तुरीयः ॥ ५ ॥ प्रायश्चित्तबोधकः पञ्चमः ॥ ६ ॥ अदीक्षितधर्मबोधकः षष्ठः ॥ ७ ॥ दीक्षितौर्ध्वदेहिकविशेषस्सप्तमे ॥ ८ ॥ अशौचादिषु कृत्याकृत्य-निरूपणेन कृत्यक्रमबोधकश्चाष्टमः ॥ ९ ॥ औशनसकल्पाज्ञाता न भवेन्महाशाक्तः ॥ १० ॥ न विध्योपासकः ॥ ११ ॥ अविध्यो-पासक आसुरः ॥ १२ ॥ इतिहासपुराणं पञ्चमम् ॥ १३ ॥ इति-हासा अष्ट ॥१४॥ षट्त्रिंशत्पुराणानि ॥१५॥ तावल्लघूनि ॥१६॥

---

जैमिन्याद्याश्च कल्पग्रन्थप्रवर्तकत्वेन निर्दिश्यन्ते । कल्पग्रन्थेष्वत्र शाक्ताभिमताः गणपतिशाक्तशैवसौरवैष्णवेति पञ्चैव कल्पास्तत्कर्तृनामसहिता निर्दिष्टाः प्रत्येकं च तेषामष्टाध्याया वर्तन्ते इति च प्रतिपादितम् ॥

इति कल्पनिरूपणं नाम चतुर्नवतितमं प्रकरणम् ॥

अधुना शाक्तदर्शनसंनिकृष्टमौशनसकल्पं विस्तरेण निरूपयति—शाक्तं कल्पमिति । अत्र कल्पे वर्तमानानामष्टाध्यायानां मध्ये प्रतिपादितं वस्तु क्रमेण निरूपयति चतुर्विंशतीति । महाशाक्तस्यास्यौशनसस्य कल्पस्य ज्ञानमत्यन्तमावश्यकम् । इतरथा स नैव वियोपासकः स्यात् । अत्र हस्तलिखिते विध्योपासक इति पाठो दृश्यते । व्यक्तमेव सोऽपपाठः । तत्र विध्युपासक इति वियोपासक इति वा भवितव्यम् ॥

इत्यौशनसकल्पनिरूपणं नाम पञ्चनवतितमं प्रकरणम् ॥

अधुनेतिहासपुराणस्वरूप निरूप्यते—इतिहासपुराणं पञ्चममिति । पञ्चम-शब्दोऽत्र वेदशब्दस्याध्याहृतस्य विशेषणम् । पञ्चममिति सौत्रं सामान्ये नपुंसकत्वम् । तथा च प्रवाद :— 'इतिहासपुराणानि पञ्चमो वेद उच्यते' इति ।

तेषां संग्रहा लघवः ॥ १७ ॥ अष्टादश पुराणानीति केचन ॥ १८ ॥ अष्टादशोपपुराणानि ॥ १९ ॥ तन्मतेन लघवः ॥ २० ॥ न्यायं गौतमे ॥ २१ ॥ तदन्तर्गतं वैशेषिकं काणादम् ॥ २२ ॥ मीमांसा द्विधा ॥ २३ ॥ धर्ममीमांसा जैमिनिना ॥ २४ ॥ द्वादशाध्याययुता ॥ २५ ॥ ब्रह्ममीमांसा द्वैपायनेन ॥ २६ ॥ तदन्तर्गतानि शाक्तदर्शनादीनि ॥ २७ ॥ षट्त्रिंशन्मिताः स्मृतयः ॥ २८ ॥ लघवो

---

अत्रेतिहाससंख्या 'अष्ट' इति निर्दिष्टा । केत्राष्टेतिहासा अभिप्रेता इति न निश्चेतुं शक्यते । पुराणानीति । अष्टादश पुराणानीति लोकप्रसिद्धमेव । तेषां चोपपुराणान्यप्यष्टादश । यद्यप्येतानि भिन्नाभिन्नकर्तृकानि तथापि 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इति लोकेषु प्रवादः ॥

इति इतिहासपुराणनिरूपणं नाम षण्णवतितमं प्रकरणम् ॥

अधुना वैदिकानि न्यायादिशास्त्राणि निरूपयति— न्यायं गौतमेनेति । न्यायशब्देनात्र गौतमप्रणीतं पञ्चाध्यायात्मकं न्यायसूत्रमभिप्रेतम् । तदन्तर्गतमिति । प्रतिपाद्यवस्तुसाम्यात्काणादं सूत्रमत्र न्यायान्तर्गतत्वेनोच्यते । तच्च दशाध्यायात्मकं काणादी दशलक्षणीति प्रसिद्धम् । मीमांसा द्विधेति । मीमांसाया द्वैविध्यं पूर्वमीमांसोत्तरमीमांसेति प्रसिद्धमेव । तत्र पूर्वमीमांसाया धर्ममीमांसेत्यपरं नाम । सा च द्वादशलक्षणी जैमिनिकृता धर्ममीमांसा द्वादशाध्यायपरिमिता । अपरा मीमांसा ब्रह्ममीमांसेति नाम्ना प्रसिद्धा अध्यायचतुष्टयान्विता बादरायणप्रणीतब्रह्मसूत्ररूपा । तदन्तर्गतानीति । प्रस्तुतानां शाक्तसूत्राणां शक्तिब्रह्मनिरूपणं कुर्वतां ब्रह्मसूत्रान्तर्गतत्वेनोल्लेखः क्रियते ग्रन्थकृता । अद्वितीयस्य शक्तिस्वरूपब्रह्मणो निरूपणं कुर्वाणमिदं शाक्तसूत्रं बादरायणसूत्राणां परिशिष्टत्वेन वर्तते इत्यभिप्रायः ॥

इति न्यायमीमांसानिरूपणं नाम सप्तनवतितमं प्रकरणम् ॥

अधुना स्मृतिनिरूपणं प्रारभ्यते—षट्त्रिंशन्मिता इति । वेदप्रतिपादितानां वेदमूलकानां वा शिष्टपरंपरासु पालितत्वेन दृष्टानां श्रुतानां वा आचाराणां यस्यां स्मरणपूर्वकं निबन्धनं सा स्मृतिः । इयं वेदाविरुद्धा सर्वथा प्रमाणम् ।

विंशतिः ॥ २९ ॥ न प्रस्थानान्तर्गतानि सांख्यादीनि ॥ ३० ॥
सांख्यपातञ्जलकापिलगाणपसौरशाक्तशैवपाशुपतभैरवपाञ्चरात्र-
सात्वतभागवतपड्विधबौद्धादीनि वेदबाह्यान्येव ॥ ३१ ॥

इति श्रीशाक्तदर्शने अष्टादशाध्यायस्य द्वितीयः पादः ॥

---

सत्स्वपि बहुसंख्याकासूपलभ्यमानासु स्मृतिषु अत्र षट्त्रिंशदेव तासां संख्योच्यते। स्मृतिष्वपि काश्चिद्वेदानुसारिण्यः काश्चिद्वेदविरुद्धमपि ऋषिपरंपरया प्रोक्तमिति प्रतिपादयन्त्यो वेदबाह्याश्च इति द्वौ प्रकारावत्र निर्दिष्टौ। तत्र द्वैतपराः साख्यादिस्मृतयो वेदबाह्यत्वेनोच्यन्ते। सांख्येति। अत्र सांख्यशब्देन भगवद्गीतामहाभारतादिषु प्रतिपादितं सांख्यदर्शनं गृह्यते। पातञ्जलशब्देन पतञ्जलिप्रणीतानि योगसूत्राणि गृह्यन्ते। कापिलशब्देन कपिलमुनिना प्रोक्तं षष्टितन्त्रमीश्वरकृष्णप्रणीताश्च सांख्यकारिका गृह्यन्ते। गाणपशब्देन गर्गप्रणीतं गाणपदर्शनं गृह्यते। सौरशब्देनागस्त्यकृतं सौरदर्शनम्। शाक्तशब्देनात्र तन्त्रेतिनाम्ना प्रसिद्धं वेदबाह्यं दर्शनं ग्रन्थकृदभिप्रेतमिति भाति। स्वकृतस्य प्रस्तुतस्य शाक्तदर्शनस्य द्वैपायनप्रणीतब्रह्ममीमांसान्तर्गतत्वेन प्रतिपादितस्य वेदबाह्यत्वेन वर्णनस्याशक्यप्रायत्वात्। शैवशब्देन दधीचिगौतमागस्त्यकृतानि शैवदर्शनानि गृह्यन्ते। पाशुपतशब्देन बादरायणसूत्रोल्लेखितं पाशुपतमतं गृह्यते। भैरवशब्देन भैरवपद्मावतीकल्पादयो ग्रन्था गृह्यन्ते। पाञ्चरात्रसात्वतमतवर्णनं महाभारतादिषूपलभ्यते। षड्विधबौद्धेति। सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकनामभिः चतुःप्रकारका बौद्धाः प्रसिद्धा एव। अत्राधिकौ द्वौ प्रकारौ काविति न ज्ञायते। कदाचिज्जैनशब्दस्यात्रादर्शनाच्छ्वेताम्बरदिगम्बरौ द्वा जैनप्रकारौ चतुर्विधबौद्धैः सह सगृहीतावत्र स्याताम्। विस्तरस्तु वेदबाह्यानामेषां दर्शनानां सर्वदर्शनसंग्रहनारदपाञ्चरात्रसात्त्वतपुराणमहाभारतादिषु द्रष्टव्यः ॥

इति वेदबाह्यदर्शननिरूपणं नामाष्टनवतितमं प्रकरणम् ॥

अथ तृतीय पाद ॥

वैशेषिकज्ञानदीक्षया संचितं नश्येत् ॥ १ ॥ वैशेषिकज्ञानदीक्षा द्विधा ॥ २ ॥ द्वैपायनविद्यया ब्रह्मविद्यापराः ॥ ३ ॥ केवलं विद्यापरा अपरे ॥ ४ ॥ द्वैपायनविद्याया अपि उशनसा कृतत्वाद् भाष्यम् ॥ ५ ॥ हयग्रीवविद्याया यथा तथा तस्यापि ॥ ६ ॥ केवलद्वैपायनसूत्रग्रहणं न दीक्षा भवेत् ॥ ७ ॥ भाष्यद्वयवेदिनो नागामिनि संबन्धः ॥ ८ ॥ विद्यावेदिनोपि ॥ ९ ॥ प्रारब्धं भोगेन ॥ १० ॥ प्रारब्धं नवधा ॥ ११ ॥ अपक्वीयशुभप्रारब्धं न यच्छेत्फलं प्रयत्नेनापि ॥ १२ ॥ प्रवृत्तिमिव ॥ १३ ॥ पक्वीयशुभप्रारब्धं यच्छेच्छुभं प्रयत्नेन ॥ १४ ॥ न चेद्यत्नं न फलम् ॥ १५ ॥ अयत्नेन सिध्येत् सुपक्वम् ॥ १६ ॥ शुभं शुभमेव ॥ १७ ॥ अशुभं चाशुभ-

---

अधुना शाक्ततत्त्वज्ञानेन कर्मप्रणाश कथ भवतीत्युच्यते । वैशेषिक ज्ञानेति । वैशेषिकज्ञानलाभपर्यन्त दीक्षितस्य न भोगादिना कर्मनाश ज्ञानानन्तर तु वैशेषिकज्ञानदीक्षितस्य सचितकर्मणो नाशस्तत्कालमेव सपद्यते। वैशेषिकज्ञानदीक्षा द्विधेति। द्वैपायनब्रह्मसूत्राध्ययनयुतेका, अपरा शाक्ततत्त्वज्ञानावबोधयुता। द्वैपायनब्रह्मसूत्राणा तथैव हयग्रीवकृतशक्तिसूत्राणा मुपरि उशनसा कृत भाष्य वर्तते। औशनसभाष्यसहितब्रह्मसूत्राध्ययनेनैव वैशेषिकज्ञानदीक्षाधिकारी भवति न तदध्ययन विनेत्यत्र सूत्रकाराभिप्राय । **प्रारब्धं भोगेनेति**। अपक्वीयपक्वीयसुपक्वभेदेन कर्म त्रिधा। पुनरपि शुभाशुभमिश्र भेदेन त्रिधा इति नवविध प्रारब्ध कर्म। तत्र शुभ शुभमेव फल प्रयच्छति। इतरादितरत्फलम्। मिश्र च मिश्रमेव फलम्। सुपक्व सद्य फल ददाति, पक्वीय प्रयत्नेन, अपक्वीय न प्रयत्नेनापि। तत्रत्यसुपक्वकर्मफल भोग्यमेव। इतरज्ज्ञानदीक्षया विनाशयेदिति। अत्रत्यग्रन्थपाठ न सुस्पष्ट ॥

इति कर्मविभागनिरूपण नामैकोनशत प्रकरणम् ॥

मेव ॥ १८ ॥ नानिवार्ये सुपक्वशुभाशुभे ॥ १९ ॥ अपक्वीयपक्वीयाशुभे शुभवत् ॥ २० ॥ मिश्रं शुभाशुभम् ॥ २१ ॥ शुभकरणेनाशुभं अशुभकरणेन शुभं च नाशयेदिति ॥ २२ ॥

इति श्रीशाक्तदर्शने अष्टादशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः॥

शिवस्कन्दब्रह्मेन्द्रविष्णवो दिवौकोगुरवः शाक्तस्य ॥ १ ॥ दौर्वासौशनसहयग्रीवबादरिनान्दिनस्सिद्धौघाः ॥ २ ॥ सुमेधदौर्गादयो मानवौघाः ॥ ३ ॥ पुराणकर्तारौ दुर्वासकृष्णौ ॥ ४ ॥ हयग्रीवो रहस्यकर्ता विद्याकर्ता च शाक्तगुरुः ॥ ५ ॥ उशनाः पुराणकर्ता च ॥ ६ ॥ हयग्रीवव्याससूत्रयोर्भाष्यकर्ता च ॥ ७ ॥ शाक्तकल्पकर्तापि ॥ ८ ॥ महाशाक्तवक्तृगुरुः ॥ ९ ॥ सिद्धान्तगुरुर्हयग्रीवः ॥ १० ॥ श्रीशाक्तवक्तृगुरुः कुम्भजः ॥ ११ ॥ शाक्तपरमाचार्यो

---

अथ गुरुनिरूपणं करोति—शिवस्कन्देति। पञ्चविधशाक्तसूत्राध्यायिनां शिवब्रह्मादयः पञ्च दिवौकसो गुरवः। दौर्वासौशनसादयः पञ्च सिद्धा गुरवः। सुमेधदौर्गादयो मानवाः। शाक्तपुराणकर्तारौ दुर्वासकृष्णौ। दुर्वास इत्यकारान्तः पाठ इहाश्रीयते। कृष्ण इति कृष्णद्वैपायनो व्यासः। हयग्रीवस्तु शाक्तरहस्यकर्ता शाक्तविद्याकर्ता शाक्तगुरुश्च। उशनसा हयग्रीवव्याससूत्रयोर्द्वयोरपि भाष्यं कृतम्। शाक्तकल्पोऽपि तेन प्रोक्तः। अतो महाशाक्तवक्तृगुरुरुशनाः, सिद्धान्तगुरुर्हयग्रीवः। श्रीशाक्तेति। श्रीशाक्तेति श्रीयन्त्राध्ययनयुता शाक्तब्रह्मविद्या सौन्दर्यलहर्यादिग्रन्थान्तर्गता। तस्या अपि वामाचारयुतत्वं निषिद्धमेव।

हयग्रीवः ॥ १२ ॥ हयग्रीवान्नाचार्यः ॥ १३ ॥ हयग्रीवरूपिणः शाक्ताचार्याः ॥ १४ ॥ मानवौघं स्वगुरुमपि हयग्रीवरूपेण ॥ १५ ॥ तदर्चनेन हयग्रीवस्तुष्ट ईशवदभीष्टं वदेत् ॥ १६ ॥ तदुपेक्षया हयग्रीव उपेक्षितः ॥ १७ ॥ हयग्रीवः पञ्चदेवात्मकः ॥ १८ ॥ ब्रह्मविष्णुरुद्रस्कन्देन्द्राः पञ्च देवाः ॥ १९ ॥ तुष्टश्चेदीश्वरोपमः ॥ २० ॥ अनलोपमो रुष्टः ॥ २१ ॥ परमकारुणिकोत्तमो हयग्रीवः ॥ २२ ॥ शाक्तज्ञानी न पुनरावर्तते ॥ २३ ॥ इयं हयग्रीवविद्या ब्रह्मैक्यदायिनी ॥ २४ ॥ अष्टादशाध्यायिनी ॥ २५ ॥ द्विसप्ततिपादोपेता ॥ २६ ॥ शतप्रकरणान्विता ॥ २७ ॥ षष्ट्युत्तरत्रिशतोपेतसहस्र-

---

अगस्त्योऽस्याः श्रीशाक्तविद्याया गुरुः। परमाचार्यस्तु सर्वस्याः शाक्तविद्याया हयग्रीव एव। हयग्रीवरूपिण इति। शाक्तपरंपरागताः सर्वे आचार्याः हयग्रीवस्वरूपिणो मन्तव्यास्तद्वदेव संमाननीयाः पूजनीयाश्च। तेषामर्चनं हयग्रीवार्चनसदृशमेव फलप्राप्तौ। तेषामुपेक्षा हयग्रीवोपेक्षेव नाशानर्थकरी। ब्रह्मविष्णुरुद्रस्कन्देन्द्रा इति। एतान्पञ्च पञ्चशाक्तसिद्धान्तदेवतास्वरूपान् हयग्रीवस्वरूपिणि गुरौ स्थितान् विभावयेत्। शाक्तज्ञानी न पुनरावर्तते इति। अस्मिन्शाक्तदर्शने प्रतिपादिता शक्तिस्वरूपब्रह्माद्वैतविद्या ब्रह्मैक्यरूप मोक्षदायिनी। अस्मिन्शाक्तदर्शनसूत्रे अष्टादशाध्यायाः। प्रत्येकं चत्वार इत्यष्टादशाध्यायानां मिलित्वा द्विसप्ततिः पादाः। शतप्रकरणान्वितेति। षष्ट्युत्तरेति। सम्प्राप्तहस्तालिखिते नैव कुत्रापि प्रकरणनिर्देशः कृतः। तथाप्यस्यां वृत्तो अष्टादशाध्यायात्मकस्यास्य सूत्रग्रन्थस्य कल्पनया शतप्रकरणा-

राजिता ॥ २८ ॥

इति श्रीशाक्तदर्शने अष्टादशाध्यायस्य चतुर्थः पादः ॥

अष्टादशोध्यायः समाप्तः ॥

शाक्तदर्शनं संपूर्णम् ॥

गुरुभ्यो नमः ॥

---

त्मको विभागः संपादितः । हस्तलिखिते दर्शितानामेकनवत्यधिकत्रयोदशशतमितानां सूत्राणां च संख्यापि सूत्रद्वयस्य स्थाने केषुचित्स्थलेष्वेकसूत्रं प्रकल्प्य षष्ट्यधिकत्रिशतोपेतसहस्रराजिता ( १३६० ) यथामति कृतेति सुधीभिर्द्रष्टव्यम् ॥

*इति गुरुमाहात्म्यसंकीर्तनपूर्वकमोक्षफलनिरूपणं नाम शततमं प्रकरणम् ॥*

इति श्रीमद्विद्वन्मुकुटरत्नभास्करशास्त्र्यन्तेवासिसकलविद्यापारंगत-**रामशास्त्रिच्छात्रवर्यमहामहोपाध्यायवासुदेवशास्त्रिसूनुना** महामहोपाध्याय-**काशीनाथशास्त्रिणा विरचिता** हयग्रीवकृतशास्त्रदर्शनस्य **वृत्तिर्मिताक्षरा**-नाम्नी समाप्तिमगमत् ॥

# Appendix No I

List of important words with their meanings and references Figures in Roman, Italics and ordinary characters show respectively the adhyāya, the pāda and the sūtra

## अ

अक्षर Imperishable Supreme Existence, सत् I iii 16
अगस्त्य Author of Saurakalpa XVIII i. 23
अज्ञान Ignorance Nescience IV. i. 13, 18, V i 14 V. ii 14, V. iv. 12 17, VI iii. 1, 2, VII ii 19
अथर्वशीर्ष a short holy text, known as गणपत्यथर्वशीर्ष XVI. iii. *18*
अद्वैत Non-dualism Monism XII iii 8, 22 X iii 14, 15, XI. i 1, 2 XVII iii 16
अधिदैवम् Theological manifestation deistic appearance VIII ii 7
अधिभूतम् *Phenomenal appearance VIII ii 6*
अध्यात्मम् Spiritual manifestation VIII ii 5
अध्यास *Superimposition*, appearance V *ii* 10, 11, 18, 19, VII *i* 16
अनाहत N. of the centre of nādis near the heart. XIII ii 15, XIV iii 16 XIV iv 4
अनुपलब्धि N of a proof of the type of absence or non acquisition, called by the term अभाव also VI iv. 6
अनुमान N. of a proof of the nature of inference VI. iv 2
अन्तःकरण mind VI iv 13 20, 24 VII iii 4 IX ii 15
अपरोक्ष (ज्ञान) direct unintervened knowledge V i 7 VI iii 6 7
अपान Internal air passing downwards XIV i 4, 17
अभिज्ञा direct perception by means of senses IX i 9 10
अर्थापत्ति proof of the type of presumption VI iv 5
अविद्या Nescience I i 12, III i 6 V i 8, *15* IX ii *16*
अश्विनौ (dual) The twin deities supposed to be the source of the original work on medicine XVIII i 4
*अष्टाङ्ग constituted of eight parts* The term is applied to the science of Yoga *XIII i* 2 9
अस्तेय abstinence from theft one of the five yamas XIII iii 5
अहिंसा abstinence from killing, non-cruelty XIII iii 3

## आ

आकाश Ether Space VI i 7, 11, 12
आगम holy scripture of a religious cult, cult-scripture IV iv. 4

आगामिकर्म future action; action in future time IV. ii. 4; XVIII. iii. 8

आज्ञा N. of the centre of Nādis at the forehead between the two eyebrows XIII. ii. 17; XIV. iii. 21; XIV. iv. 6

आत्मा The Supreme soul, I. i. 9; IV. ii. 5, 6, 10, 11; VII. i. 13; VII. ii. 2, 4, 14, 15, 17, 19, 20, 22; VII. iv. 19, 21; XI. ii. 9; XII. iii. 2, 6, 20; XIII. i. 18

आदित्य author of a Jyotiṣa work XVIII. i. 17

आधार called also मूलाधार, N. of the lowest centre of Nādis XIII. ii. 7, 9; XIII iv. 9, 12; XIV. ii. 18, XIV. iv. 1; XV. i. 1, 6, 11, 16.

आनन्द Bliss, Supreme bliss, X. iii. 12, 16; X. iv. 14

आनन्दभवन Seat of bliss, Abode of bliss, same as Maṇidvīpa X. iv. 14

आभास Appearance, Light, Sentience; II. ii. 2; III. iii. 4; V. ii. 1, 2, 3, 5, 11, 14, 17, 18; VI. iii. 10, 11, 12, 13; VI. iv. 24; IX. iii. 2, XI. iii. 7; XII. iii. 22; XII. iv. 2, 3; XIII. i. 8

आयुर्वेद The science of medicine XVIII. i 4

आर्जव Straightforwardness, equality of treatment to friends and foes XIII. iii. 8

आवरण cover, intervention IV. i. 18; IV. iii. 10; V. i. 3, VI. ii. 3, 8; VI. iii. 3, 5, 6; VII. i. 15; VII. ii. 7

आवरणस्तव N. of a mystic holy hymn in the Śākta philosophy XVI. iii. 18.

आसन steady comfortable posture of the body for meditation XIII. i. 9; XIII. iv. 1; XV. i. 26

इ

इडा N. of a Nāḍi inside the body XIV. i. 2, 10; XIV. ii. 6.

इतिहास legendary works; a category of works consisting of partly legendary and partly historical account, which, along with epic works, are termed 'fifth Veda' XVIII. ii. 13, 14.

इन्द्र N. of a divine teacher of the Śākta faith XVIII. iv. 1, 19.

ई

ईश lord; name given to the divine forms of the Supreme Power II. i. 9; II. iii. 8, 9; III. iii. 2, 7; III. iv. 10, 19, 20; V. ii. 6; VI. i. 17; VI. ii. 1, 6; VIII. i. 9; VIII. ii. 9; VIII. iii. 3; IX. ii. 8, 10, 11, IX. iii. 5; IX. iv. 6, XII. i. 11; XII. ii. 7; XII. iii. 15, 16, XIII. ii. 17.

ईश्वर Supreme God, name given to the divine forms of the Supreme Power II i 7, II. ii 1, 7, 16, 17, II. iii 3, 5, III i 5, III iii 17, III iv 1, 17 V. ii 2 VI i 3, 6, 12, 13, 14 VII i 10, VII ii 24, VIII. ii 1, 8 IX ii 12 IX iv 7, XI i 17, 22, XI. ii 10, 14, 17, XII. i 8, XVIII iv 20.

ईश्वरी Supreme Goddess, VII. iv 9, VIII iv 3, X iv 7.

## उ

उड्डयाण, also उड्डियाण another name of मणिपूर *XIV. iii 14*

उपनिषद् N given to the sacred philosophical revelations XIV. iii 14 XV iv. 21, XVIII i 3

उपमान N. of a proof, called 'proof of analogy' or 'comparison' *VI iv. 4*

उपाधि limitant, limiting condition VI iv 19, 20, 22, VIII. ii 8, *11, 12, 13, 14, 16, IX 2, 15*

उपासन devotional meditation IV i 15, 17 IV iii 9 X i 4, *XVII iii 4*

उपासनाकाण्डकल्प N given to an ancient holy text of rituals and devotion XVIII i 26

उमा N given to the deity of Power, immanent in everything I. ii 13, 16, I iii 1, 11, I iv 13

उशनस् N of the divine preceptor who revealed a cult of rituals and tenets XVIII i 8, 21 and wrote a gloss on the Sutras revealed by Hayagrīva XVIII ii 5, XVIII iv 6, 7, 8

औशनस (कल्प) N given to a text of rituals revealed by Uśanas, the holy preceptor of the Saktas XV iii 14 XVIII ii 1, 10, XVIII iv 2

## क

कन्द the centre of nādis similar to a bulbous root near the navel which is called नाभिकन्द *also XIII iv 12 17 XIV i 1, 19*

कपिल The ancient sage who propagated the Sāmkhya tenets called *Kāpila Sāmkhya after him VI iv 3*

कर्म The rites, rituals and similar religious and other activities which are described *to be of four kinds* नित्य, नैमित्तिक, काम्य and निषिद्ध IV i 14, IV ii 3 IV iii 2 IV iv 6, VI i 4 6

कर्मकाण्ड *The Vedic texts in* which religious activities are prescribed Vedic section on action IV iii 8

कर्मठ *a person devoted* solely to karma or religious activities XV· iv 15

कर्मनिष्ठ devoted solely to religious activities X i 7 X ii 1 XV iv 11 13 XV iii 10 devoted to religious activities according to the Sakta tenets XV ii 12, 14

कर्मब्राह्मण A person called ब्राह्मण merely on account of the performance of religious actions without their knowledge XVII i 2 XVII iii 3 14

कर्मयोगी fully conversant with the code of rituals X i 7

कल्प an ancient religious work on rituals XVIII i 18 25 26 XVIII ii 1 method VII iv 5

कवच popularly called देवीकवच a small text in praise of the Supreme Goddess XVI iii 18

काती short form of Katyāyanī N of a manifestation of the Supreme Goddess I iii 4

कपिल the philosophical system introduced by Kapila XVIII ii 31

कामशास्त्र a treatise on human passion or erotics written by Vatsyāyana XVIII i 5

काम्यकर्म action undertaken with some object in view IV ii 8 IV iii 3 V i 11 XVI ii 13

कारणलोक The world of rudimentary elements which in its turn develops into subtle universe and gross universe I iv 7 8

कारणेश्वर Lord forming the supreme cause of the Universe a manifestation of the Supreme Power I iv 9

कार्यलोक the manifested or produced Universe consisting of three phases—rudimentary Universe the subtle Universe and the gross Universe XVIII iii 7

कार्येश्वर Lord or ruler of the karyaloka these rulers are three—Rudra Visnu and Brahman corresponding to the three worlds I iv 10

काल the principle of time which is but the desire of the Supreme Power made up of a combination of nescience (माया) and consciousness (चित) I ii 9 I iv 17 19 II iv 1 4 6 7 10, 11 12 14 15 III i 4 7 10 17 III iii 5 7 9 III iv 11 IV i 12 V ii 5 VII ii 20 XI iii 15 16 XII i 10 11, XII 15 16 26

कुण्डल a term used for the Kundalini nadi XIV iv 8

कुण्डला a term used for the Kundalini nadi XIV ii 18

कुण्डलिनी one of the main nadis or air vessels situated in the lowest circle or cakra called the Muladhara cakra XIII iv 10 XIV i 1 XIV iii 6

कुम्भक control of the breath for a short time inside the lungs after inhaling it XIII. i 17; XIV. ii. 7, 10, 15

कुम्भज a term used for Agastya, the author of the treatise Śaivakalpa and preceptor of the Śāktas XVIII. i. 22, XIII. iv. 11.

कुहू N. of one of the Nāḍīs XIV. i. 3, 6, 7.

कूटस्थ a term used for the Supreme Spirit which is unchangeable. VI. iii. 4, 9, 11; VII. iv. 21; VIII. iii 4

कृष्ण a mythological person who completely disowned his mind V. iii. 11; son of Nanda who came to be looked upon as a deity VII. i. 8; author of an epic work XVIII. iv. 4

कैवल्य Complete liberation, Emancipation IX. iv. 5; X. 2–4

कोश an element constituting a living being. There are five *kośas* given *अन्नमयकोश, प्राणमयकोश, मनोमयकोश, विज्ञानमयकोश,* and आनन्दमयकोश. VII. i. 16, 17; VII. ii. 10, VII. ii. 13, 14

क्षत्र a member of the Kṣatriya caste or group XVI. i. 10, 12

क्षत्रिय a member of the Kṣatriya caste or group XVI. i. 2; XVII. i. 6

ग

गजानन N. of a deity considered as witness of everything; the same as Gaṇeśa. XIII. iv. 11

गणपति Same as Gaṇeśa, the witnessing deity of everything in the world III. ii. 1; III. iii. 7, 8; VIII. iii. 12; XI. iii. 14 XI. iv. 1, 11, 13, 14; XII. iii. 23; XIII. i. 9; XIV. iii. 6; XV. iii. 7

गणपतिकल्प a sacred text describing the rituals and observances prescribed for the cult of Gaṇeśa. (This text is different from the section of that name in the Yājñavalkya Smṛti) XVIII. i. 20.

गणेश N. of a manifestation of the goddess Bhuvanasundarī, called शक्तिपुत्र I. iv. 15, 20; III. i. 2, 11, 19; III. ii. 1, III. iii. 6; III. iv. 5, 15; X. iii. 3, 4, 8; XII. ii. 10

गणेशदर्शन Cult of Gaṇeśa XV. iii. 20

गर्ग author of a Kalpa text X. iii. 17, XVIII. i. 20

गाणप a follower of the Gaṇeśa or Gaṇapati cult X. iv. 1, XVI. ii. 17, 19; XVIII. iii. 31

गान्धर्व Science of Music XVIII. i. 7

गान्धार Same as गान्धारी N. of a Nāḍi inside the body XIV. i. 4, 9, 18

गीता The Bhagavadgītā XV. iv. 21; XVI. iii. 18

गुण The three constituents of the primordeal matter or Prakrti I. ii. 10, I. iv. 19, II. i. 7; II. ii. 9, II. iii. 6, III. i. 7, 8, 15, V. ii. 1; XI. iii. 15, 18, XII i. 13, XII. ii. 11

गुरु The holy Śākta preceptor V. iii. 1, 12, 14, 15, 16, 17; XVIII. iv. 1

गृही a member of the second stage of life, a householder XVI. i. 7, 11, 12, 15

गौतम N. of an ancient philosopher and the author of the Nyāya-sūtras I. i. 13, II. iii 7, VI. iv. 4, IX i. 4, XV. iii 22

च

चित् the principle of consciousness or knowledge, I ii. 2, II ii. 3, 6, II. iv. 10, V. ii. 5.

चित्त mind, internal sense XIII. ii. 1, 2

चिन्तामणि the God immanent in everything, another name of Ganeśa called so by virtue of his yielding whatever is desired X ii 10, 11, X. iii. 1, 3, 5, 10, X. iv. 1

चिन्तामणिगृह the abode of चिन्तामणि, pure Māyā of the nature of sattva or essence of goodness X ii 10. X iv. 1

चिन्तामणिगेह the same as चिन्तामणिगृह the abode of the supreme power X. ii. 11; X. iii. 1, 10

चिन्तामणिद्वीप the same as मणिद्वीप the place of residence of the Supreme Power X iv. 1

चिन्तारत्न the primaeval matter or original Prakrti X. ii. 9

चेतन word used in the sense of चैतन्य, or चित् V. ii. 12, VI ii 11, 18, VII iii 12, XI ii. 15, possessed of supreme knowledge and therefore the same as चैतन्य or चित् V. iv. 4

च्यवन N of an ancient philosopher XI iii. 23

छ

छन्दस् the science of prosody XVIII i 13

ज

जगत् the Universe, the Creation V iv 15, 16

जगद्बीज the germ-seed of the Universe causing जीव, ईश, शक्ति and काल XI iii. 9, 14, 15, 32

जल the element of water in creation VII iii. 6, 7

जालंधर N. of a nādi-centre at the root of the throat XIV. iii 18

जीव the individual soul III. i. 6, IV. i. 12, V. ii. 6, VI. i. 1, 11, VI. ii. 6, VI. iv. 24, IX. iii. 5, 7, XI. i. 13, XI. ii. 9, 13, 16, XII. iii. 15, XIII. ii. 16, XIV. iv. 9

जैमिनि N of an ancient author of a Kalpa text VI iv.5, XVIII. i. 19

ज्ञान knowledge IV. i. 13, 18, IV. iii. 10, IV. iv. 2; V. i. 1, 2, 14, 15. V. ii. 3, 9, VI. iv. 9, VII. i. 2, 11; VII. ii. 16, VII. iii. 4; VII. iv. 1; VIII. iii. 19

ज्ञानब्राह्मण entitled to be called a Brāhmana by virtue of his superior knowledge, a Brāhmana in the actual sense of the word XVII. i. 3, X. i. 6; XI. i. 4, XVI. i. 5, XVI. iv. 15, XVII. iii 1

ज्ञाननिष्ठ devoted to the obtainment of the knowledge of the Supreme Entity X. i. 11, XI. i. 3, XV. ii. 12, 16, XV. iv. 7, 21; XVI. 3, 20

ज्ञानयोगिन् One who has realised the Supreme Spirit by virtue of his superior knowledge X. i 11; XI. i. 2

ज्ञानिन् One who has realised the Supreme Spirit. V. ii 12, 13, VII. ii. 23, X. i. 2, X. II. 4, XI. i. 1, XV. iv. 30, 31

ज्योतिष The Science of the luminaries, astral science XVIII. i. 16

## त

तन्त्र text of the rituals of a sect, cult rituals XVII. iii. 1, 4

तन्त्रदीक्षित initiated only in the rituals of a cult and not in the obtainment of the knowledge of the principles in it XVII. i. 12, XVII. i 12, XVII. iii. 1

तन्त्रब्राह्मण called Brāhmana merely by his observing the rituals of a cult.

तान्त्रिक follower of the mystic rites of a cult, Vāmin or the follower of the Vāmamārga. XVI ii 22, XVII. iii 1

तान्त्रिकी initiation into mere mystic rituals. XVII. i. 13

तामस mostly constituted of the element of तमस् or ignorance I. iii 13, II. ii 111, XIII. ii. 12, XV. i 4, XVII. i. 8.

तामसी see तामस abova IX. iii. 3, XIV. iii. 17

तुरीय the fourth or the last of the rising stages of the soul, the most elevated stage of the soul I. iii. 16, III. iv. 9, VIII. ii. 16, 17, 24, 25

तुरीय (वेद) the fourth Upaveda revealed by Uśanas and others XVIII. i. 8

तुर्य See तुरीय above XII. iii. 20, 21; XII. iv. 5, 6

तेजस the second of the progressive stages of the soul. I. iii. 14, VII. iv. 21; VIII. i. 7, 8, 10, 12, 14, 16, 18, 19; VIII. ii. 13, VIII. iii. 2

द

दक्षिणमार्गिन् a person who follows the right path of the rituals XVII. iii. 5,

दधीचि one of the authors of texts on the Śaiva cult. XVIII. i. 22

दर्शन faith; a religious cult XV. iii. 18

दशाङ्ग the ten cardinal texts to be recited regularly by a follower of the Śākta darśana XVI. iii. 17.

दाल्भ्य N. of the author of a Vaiṣṇava cult XVIII. i. 24

दीक्षा regular initiation into a faith in the prescribed way XVII- iii 6; XVIII. iii. 2

दीक्षित a regularly initiated person in a particular cult XV. ii. 1; XVI. 8, 9, 10, 11, 15; XVI. iii. 1; XVI. iv. 10; XVII. i. 16, 17; XVII. ii. 15; XVII. iii. 15; XVIII. ii. 8

दुर्वासस् N. of an ancient sage who is attributed the authorship of a Purāṇa work XVIII. iv. 4

दृक्चक्र N. of a centre of Nādis near the eyebrows. XV. i. 4, 9, 14, 18

देव a god; a deity; a manifestation of the Supreme Power III. i. 7

देवानुमोद study and grasp of the proper meaning of the cardinal sentences ( महावाक्यानि ) of the Upaniṣads XV. iii. 27, 28, XVI. i. 11

देवी a manifestation of the supreme power XI. iii. 1, 2, 7, 10, 18; XII. iii. 25; XII. iv. 7, XV. iii. 2

देह body made up of a combination of the five elements VII. i. 7, 14, 15; VII. ii. 8, 9, 10, 13, 20

दौर्ग One of the human preceptors of the Śākta tenets XVIII. iv. 3

दौर्वास one of the Siddha preceptors of the Śākta doctrines XVIII. iv. 2

द्वैपायनविद्या the philosophical doctrines preached by Dvaipāyana XVIII. iii. 3, 5

द्वैपायनसूत्र the philosophical Sūtras composed by Dvaipāyana known at present as Brahmasūtras XVIII. iii. 7

**ध**

धनुर्वेद one of the four upavedas XVIII i 6

धन्वन्तरि an ancient author of a text on Medicinal lore XVIII. i 4

धारण holding the breath inside the lungs XIV. ii 13, XIV. iii 3, XV i 29

धारणा one of the eight constituents of Yoga XIII i 9, 19, XIV. iii 3

ध्यान one of the eight constituents of Yoga VII iv 3, 4, 5, XIII. i 9, 20, XIV iv 8, XV i 32 XVI i 22

**न**

नन्दिकेश a grammar philosopher who advocated Siva as the supreme deity interpreting the passages on Sakti in his favour, probably the author of the Nandikeśvara Kāśikā XII i 16

नन्दिन् N of one of the Siddha preceptors of the Sākta doctrines XVIII iv 2

नाडी an air vessel inside the body XIII iv 12 13 15, XIV ii 1

नाभिचक्र one of the six circles or centres of Energy inside the body which forms a centre of the Nādis near the navel XV i 2, 7, 12 17

नामनिष्ठ an initiated person or Diksita in the initial stage XV ii. 12, 13, XV iv 8, 10, XVI iii 6

नारायण N of the supreme deity according to the doctrine of Parasara II i 8, 13

निजलोक the supreme Deity s own world X iv 4

नित्यकर्म obligatory action as prescribed by the holy texts IV ii, 8, 9, 11, IV iv 6, XVI ii 12

नियम the second of the eight constituents of Yoga XIII i 9. 12, XIII iii 13 XV i 25

निरुक्त N of a treatise on etymology written by Yāska XVIII i 14.

निर्वाण-(दीक्षा) complete concentration on *Brahman XV iii 31*. XVI ii 5

निर्वाणदीक्षित initiated for the realisation of Brahman XVI i 1, XV iv 1

निर्विकल्प (समाधि) complete merge into the nature of Brahman XIII i 2

निर्विकल्पक समाधि complete concentration of mind on Brahman VII. ii 7, X iii 14

निषिद्ध prohibited actions one of the four divisions of Karman IV ii 7, IV iii 1
निष्काम कर्म activity without desire i e without any fruit in view IV i 16 X i 7
नैमित्तिक activity on specifically mentioned occasions IV ii 8 IV. iv 7 XVI ii 14 XVIII ii 4
न्याय Science of Logic introduced by the ancient sage Gautama· XVIII ii 20

प

पद्मबद्ध a term used in connection with Itihāsa and Purāna works XV ii 8 XV iii 11 12
पञ्चीकृत made up of five constituents in the prescribed manner V iii 2 3
पद्मासन one of the steady postures for concentration XIII iv 2
पराशर N of an ancient sage who founded a Vaisnava cult with Narayana as the Supreme Deity II i 14
परोक्ष indirect knowledge VI iii 5
पयस्विनी N of a nadi inside the body XIV i 14
पाञ्चरात्र N of a system of philosophy XVII iv 5 XVIII ii 31
पाणिनि The first systematic writer of Sanskrit grammar XVIII i 10
पातञ्जल the yoga system of Philosophy described by Patañjali XVIII ii 31
पार्वती one of the emanated forms of Bhuvanasundari I iii 3
पाशुपत an ancient Śaivite cult XVIII ii 31
पिङ्गल the first writer on prosody XVIII i 13
पिङ्गला N of a naḍi inside the body XIV i 2 5 11
पुराण a mythological text IV iv 4 XV iii 12 13 XVIII ii 13, 15 20 XVIII iv 4
पुरुष Soul spirit III i 10 VIII i 6
पूरक inhaled breath XIII i 15 XIV ii 7 9 14
पूषा N of a nadi inside the body XIV i 5 8 13
पृथ्वी the earth VIII iii 6
प्रकृति the primaeval matter VI i 14 VII iii 9 10 IX ii 3 IX iii 7 9 IX iv 1 X ii 5 XI iv 3 XII ii 11 XII iii 8 XIII i 7 XIV iii 5 XV i 1 XVII iv 1
प्रजापति an ancient philosopher advocating tha doctrine of Brahmadeva being the Supreme lord IX ii 2

ब्रह्मन् (masc.) god Brahmā, the creator I iii 5, 6, I iii 13, 17, III iii 13, III iv. 12 IV. i 7, V iii 12, VIII. iii 5, 9, IX. ii 12 IX. iv 13, XI. iii 18, XII. i 2, XIII ii 10, XIV iii 14, XV. i 7, XII iii 27, XVIII iv 1, 19

ब्रह्मा (masc.) author of a Sikṣā work XVIII i 10

ब्रह्मन् ( neuter ) the Supreme Spirit, the Highest principle, the Eternal Existence, II iv. 13, III iv 18, 21, V. i 8, V ii 1, 8, VI ii 23, VI ii 19, 22, VIII iii 13, 15, VII iii 13, VII iv 17, 18 20, VIII iv 12, X iv. 5, 6 XI i 23, XI ii 7, 8, 10, 12, 14 17, XI iv. 2, 6, 7, 11, 14, 15, 16, XII iii 1, 4, 5, 12, 13, 14, 19, 20, XIII ii 9, XIV. iii 10, XVI ii 4

ब्रह्मरन्ध्र the aperture above the head at the centre through which the vital soul of a Brahmajñānin is supposed to pass away XIII ii 8, 13, 18, XIII iv 16, XIV. i 1, XIV. ii 23, XV. i 5, 10, 15, 19

ब्रह्मलोक the world of Brahmadeva IX ii 2, 13, 15, 17 IX iv 11

ब्रह्मविद्या the lore of Brahman, the knowledge of Brahman or the Supreme Spirit I ii 7, XVII iii 12, 16

ब्रह्माण्ड the egg of Brahmadeva, the Universe I iii 7, VII iii 2

ब्राह्म ( दर्शन ) the cult of Brahmadeva introduced by the sage Bādara XV iii 24

ब्राह्मण a member of the Brahmana caste, a person devoted to securing the knowledge of Brahman who can be called ब्राह्मण in the real sense of the word XVI i 1 18, XVII i 1, 2, 3, 5, 16 17

## भ

भक्ति devotion to a deity I iv 6, V iii 2, X. i 4, XV. iii 1 2

भक्तिमार्गिन् following the path of devotion for the propitiation of the deity XVII iii 2

भक्तियोगिन् One who has concentrated on devotion for the propitiation of a deity, X i 8

भक्तिसूत्र a text on 'devotion in the Sutra form XVII iii 13

भद्रासन a steady posture of the body as prescribed in the Yoga texts XIII iv 4

भरत an ancient sage, the author of the Gandharvaveda XVIII i 7

भागवत ( मत ) Belief in Visnu as the Supreme God XVIII ii 31, XV iii 13

भागवत ( पुराण ) N of a famous epic work XV iii 13

भार्गव (च्यवन) an ancient sage, the advocate of the Gaṇapati cult XI. iii. 13

भुवननायिका N. of the Supreme Deity Bhuvanasundarī VI. ii. 13

भुवनराज *Perfect concentration on an object XIII. ii. 5*

भुवनसुन्दरी N. of the Supreme Energy or Śakti. I. ii. 7, I. iii 12, II. iii. 13

भुवनेश्वरी the same as भुवनसुन्दरी, which see above III. ii. 3; IV. i. 2, IV. i. 13, VII. i 4, 5, VIII. iii. 8, IX. iii. 2.

भूमा the great blissful region V. i. 9

भैरव N. *of a cult with Bhairava or Kālabhairava as the supreme* deity XVIII. ii. 31.

भैरवी (चक्र) the circle of the devotees of the goddess Bhairavī. XVII. ii. 15

भ्रान्ति illusion, false knowledge; VI. iii 4, 7; IX. i. 15

## म

मणिद्वीप called also सर्वलोक, the abode of the Supreme Divinity Bhuvanasundarī. I. iv. 8, VIII iii 21, VIII. iv 1; IX. ii. 14, 16, 18, 19, IX. iii. 1, 8, IX. iv. 6, 14, X. ii. 5, X. iii. 17, X. iv. 15, 16

मणिपूर N. of a centre of Nādīs, near the navel XIII. ii. 14, XIV. iii. 14, XIV. iv, 3

मत a view, a philosophical or religious system IV. iv. 4

मतसंध्या the prayer offered to a deity according to one's belief in a particular cult XVI iii. 10, 11, 16

मनोमनी an emanation of Bhuvanasundarī, the deity of mental power I. iii. 2

मन्त्रनिष्ठ devoted to the utterance of a holy formula along with meditation XV ii 12, 15, XV iv 14, XVI iii 15

मन्त्रयोग practice of Yoga along with the utterance of the sacred *spell or charm* or *formula*, method of knowing the supreme power by charm or spell XV i 20, XV. iv. 24, 27

मन्त्रयोगिन् devoted to the realisation of the Supreme Energy by the utterance of charms or holy formulae X. i. 9, XIII i. 5, 8, XV. i. 36, XV. ii 17, XV. iv. 5, 24, XVI. iii. 21.

मन्त्रसंध्या prayer along with the utterance of the prescribed formula. XVI. i. 28, XVI. iii. 4

मन्त्रिन् devoted to the utterance of charms or holy formulae XV. iv. 16, 17, 20

मरीचि *an ancient sage who wrote a text on 'Dhanurveda'* XVIII i 6

मल dirt of mind evil thoughts and sin IV i 6 IV iii 2, 8

महामाया the great nescience the radical nescience or illusion II ii 9 14

महालक्ष्मी one of the three great goddesses the emanations of Sakti I ii 11

महाशाक्त a great devotee of Sakti XVIII ii 10 XVIII iv 9 XVII iii 9

महावाक्य the sublime sentence of the Upanisads referring to the Supreme Spirit V i 6 VII ii 16 XI i 4 16 XV iii 26

महेश a higher form of god Śiva the manifestation of Manonmani Sakti I iii 2

माया the illusion the illusory power I ii 2 II i 3 II ii 4 II iii 8 II iv 3 5 11 12 13 III i 1 3 5 7 9 16 III ii 5 6 III iii 2 3 4 5 V ii 4 11 VI ii 12 VII i 3 VII iii 10 11 IX iii 2 X iii, X.5 iv 4 XI iii 15 17 25

मीमांसा the Science of interpretation especially of Vedic passages XVIII ii 22 26

मुक्त liberated person V i 13 20 VI ii 2 VII ii 21 X i 2 X iv 3 XIII ii 21 XV iv 1

मुक्ति Absolution complete liberation from the primaeval bondage Emancipation V i 8 VIII iii 20 IX ii 1 IX iv 14 X iii 17 X iv 18 XVII iii 7

मुद्गल N of an ancient sage and philosopher I i 14

मूर्ति bodily form image idol VII i 2 3 4 6 XI iii 6

मूलमन्त्र the basic formula for initiation XV iii 7

मूलवह्नि the fire or spirit inside the body near the first circle known as मूलाधारचक्र XIII ii 6 XIV iii 5

मूलाधार the first of the six great circles or centres of energy inside the body XII iv 7

मोक्ष Liberation freedom from worldly life V iv 1 VI ii 7 VII ii 27 XV ii 2

य

यति an anchorite a member of the fourth stage of life XVI i 13 17 19

यन्त्र a magic conventional figure of lines drawn on a sheet representing a deity XV i 30 XV iii 9 XV iv 19

यम the restraint of the senses XIII i 9 11 XIII iii 2 XV i 24

यशस्विनी N of a nāḍi inside the body XIV i 5 7 8 12
याज्ञवल्क्य N of an ancient sage who is supposed to have advocated the doctrine of काल or time as the supreme principle II iv 9
याज्ञवल्क्य an ancient sage who made a complete surrender of his wealth V iii 8
याज्ञवल्क्य an ancient sage who upheld the Saura doctrine XV iii 21
योग the philosophy advocating a complete restraint on the body and mind X i 5 XIII i 1 9 XIII ii 1 3 4 XVII iv 8
योगनिष्ठ a man devoted to Yogic practices X i 10 X ii 3 XV ii 12
योगिन् a person who has completely mastered his body and mind V i 1 2 IX iv 7 8 XVII ii 17
योगरूढि power possessed by a word to give a sense which is partly etymological and partly conventional XI i 7

र

रज्जुसर्प the analogy of the false notion of a serpent on the sight of a rope V iv 17
रमा N of the Supreme Energy emanating the creator I iii 4
रहस्य N of a sacred text of the Saktas XV iiii 15
राजयोग the Royal Yoga the gnana yoga XIII i 10
राजयोगिन् one who has mastered the Raja yoga the royal path of self control XIII i 5 7 XV i 34 XV ii 19 XV iv 2 29
राजस constituted of the element of रजस् or passion I iii 17 VII iii 5 XIII ii 10 XIV iii 13 XV i 2 XVII i 7
राम the great ruler of the name who surrendered completely his speech i e who always did what he said V iii 9 VII i 8
रुद्र deity ruling over the Rudimentary universe I iii 3 15 18 19 I iv 12 II i 6 II iii 2 4 5 6 8 III iii 13 III iv 14 IV 9 VIII iii 7 11 IX ii 12 XII i 2 XII iii 29 VII ii 12 15 XIV iii 17 XV i 9 XVIII iv 19
रेचक exhalation of breath XIII i 16 XIV ii 7 11 16

ल

लक्षणा indicatory power of a word power of indication XI i 8 12 13 14 15 XI ii 5 15
लक्ष्मी ruling deity of the Subtle Universe I iii 10

लक्ष्य the sense of a word by the power of indication III ii 2, 4, XI ii 12 20 21 Xr ii 4 11

लय a complete merge into another object yoga practice or method VII iii 1

लहरी a holy text of the Saktas possibly the Saundaryalahari VI 3 18

लिङ्ग a subtle body made up of seventeen subtle things IV i 10

व

वनि a member of the third stage of life Vanaprastha XVI i 8 16

वरुणा N of a nadi inside the body XIV i 7

वर्ण caste such as ब्राह्मण क्षत्रिय वैश्य or शूद्र IV iv 3 XV i 5 XV 1 XVI 18 19 XVI ii 1 11 12 15 XVI iii 10 XVII i 13 XVII ii 1 6 XVII iii 3

वर्णसन्ध्या the prayer offered by a member of the three castes XVI iii 10 11 16

वर्णिन् a member of the three higher castes IV 3 11 XVI ii 6 7 20, 21 XVII i 9 11 12 13

वाच्य the denoted sense of a word XI i 10 11 13 14 15 17 18 19 21

वामिन् a follower of the Vamamarga of the Saktas XVII ii 2 3 8 20

वायु air inside the body which passes through the air tubes or vessels XIV ii 1 2 18 19 20

वायु air as the fourth of the five elements VII iii 8

वासुदेव the Supreme Deity according to the cult of Vasudeva XI iii 3 5 XII iii 28

विघ्न interruption in Yoga practices mental distraction IV 17 IV iii 9 XIII ii 4

विदेह bodiless condition of the individual soul VIII iv 17

विद्या Superior knowledge correct knowledge of the Supreme Spirit XVIII ii 11 XVIII i i 9 Sentiance consciousness I i 12 I ii 1

विधि God Brahma the Creator III iii 15

विराज the soul of the gross Universe I iii 9 VI i 18 VIII i 1 3 5 VIII iii 1

विवेक mental discrimination X i 4 6

वैष्णव pertaining to the Vaiṣṇava doctrines XV. iii. 23, XVI ii 18, XVIII i 24

वैष्णवी ( माया ) pertaining to god Viṣṇu II. ii 11

व्यास an ancient sage to whom a Nirukta work is assigned XVIII i 15

श

शक्ति Supreme Power or Energy I i 1-5, 11 I iii 20, I iv. 1, 13, 21, II i 1 6 II ii 3, 5, 10, 17, II iii 1, 12, 13 II iv 13, 14, 16 III i 9 18 III ii 3, 5 9, III iii 1, 4, 7, 10, 13, 14 III iv 4 10, 18, 22 IV i 1 V i 2 , V ii 1, V iii 12 VII iii 12, VII iv 6 8 13, 14 15 17, VIII iii 8, 14, 15 VIII iv 3, 5 IX ii 1 IX iii 6, IX iv 5 X i 1, X II 10 X iii 1, XI iii 17, XI iv 3 5, 6 12 13 16, XII i 5 9, 12, 14, 15, 16 XII ii 5 6, 8 12, 13 XII iii 15, 16 XII iv 1 8 XIII ii 13, 18 XIV iii 8 24 XV i 10

शक्ति power of denotation XI i 9

शक्तिज born of Sakti, N of Gaṇeśa XV iii 23

शक्तिपुत्र same as Saktija or Ganesa I iv 14, II iii 11 III ii 7 XIV iii 10

शङ्खिनी N of a nāḍi inside the body XIV i, 9, 17

शक्य a denoted sense or object XI i 9 10

शाक्त a follower of the Sākta doctrines IX iv 8 X i 1 XII i 3 XV iii 26, XVI ii 17 19 XVII ii 15 XVIII ii 31, XVIII iv 1

शाक्तकर्म rites and rituals of the followers of the Sakti school XVIII i 21 XVIII ii 1

शाक्तगुरु a preceptor of the Sākta doctrines XVIII iv 5

शाक्तज्ञानी one who has realised the Sakti or Supreme Power IX iv 2, 8, X ii 11, XVIII iv 23

शाक्तदर्शन the system of the Sakta philosophy which is a constituent part of the Uttaramimāmsā or Vedānta XV iii 25 XVIII ii 27

शाक्ताचार्य the preceptor of the Sākta System of Philosophy XVIII iv 14

शाब्द the proof of word VI iv 3

शाब्द the science of grammar XVIII i 11

शाम्भव follower of the Śaiva doctrines. XVI. ii. 18

शिव the supreme god according to Nandikeśa and other Śaiva philosophers XII i 1, 4, 16, XII ii 1, 9, 13 N. of the deity in charge of the rudimentary Universe III iv 4, V iii 15

शिव N. of the Divine preceptor of the Sāktas XVIII iv. 1

शिक्षा a work on Phonetics XVIII i 9

शुक an ancient sage who made a complete surrender of his body V. iii 10

शूद्र a member of the fourth caste XVI i 4, XVII i 8, 15, XVII ii 6, 7

शून्य Nihilism, XVII iv 7

शैव (दर्शन) a system of philosophy with Śiva as the Supreme Deity XV iii 22, XVIII i 22, XVIII ii 31

श्रीशाक्त a section of the believers in Sakti XVII iii 10

श्रुति the holy Vedic texts IV iv 3, 4, XII. ii 6

स

संचितकर्म accumulated actions waiting for fruition IV ii 4, XVIII iii 1

सन्यासी a member of the fourth stage of life, who has completely renounced Karman XVI i 9, XVIII ii 30, 31

सत् the highest principle, the Absolute Reality XI iv 1, 2, 3, 14, 16, XII iii 3, 7, 22 23

सत्त्व the element of goodness I iii 18 VI iv 16, VII iii 4, IX iii 4, X iii 5, XI iii 3, 5, 7, XIII ii 11, XV i 3, 5, XVII i 5, 6

सदाशिव god in charge of creation representing the principle of Intelligence or Buddhi I iii 1, XIV iii 22

समय the primary stage of the Sākta Dīksā XV ii 3, 4, XV, iii 4, 6

समा N of a nādī inside the body XIV i 4

समाधि complete absorption into the object in the mind so as to be identical with it, the last of the eight constituents of

Yoga V. iv. 13, X i 2, 12, XI i 1, 2, XIII i 9, 21, XIII ii 19, XIV. iv. 9, XV. i 23, 33

सरस्वती the presiding goddess of the gross world I ii 12, I iii 9

सरस्वती N of a nāḍī inside the body XIV. i 3, 8 9, 15

सर्वलोक the Universe of everything the same as the Maṇidvīpa, the abode of Bhuvanasundarī VIII iv 1, 2, 13, IX ii 14, X ii 5

सहस्रनाम N of a sacred text of the followers of the Śākta-darśana, possibly the same as the Devīsahasranāma XVI. iii 18

सांख्य N of an ancient philosophical system which is dualistic, XI i 5, XVII iv 1, XVIII ii 31

साक्षिन् the witnessing deity, Ganesa believed in the Śākta system as the supervising deity I iii 12, II iv 2, III i 1, III ii 2, 4, 6, III iii 5, III iv 18, VI i 2 VI iii 13, VI iv, 20-25, VI ii 26, VII iv 8 20, IX iv 5, X iii 8, X iv 9, XI ii 16, 17, 18 XII iv 2, XIII ii 16, 17, XIII iv 11

साक्षिणी witnessing goddess X iv 8

साक्ष्य standing as a witness witnessing activity VII ii 25

सात्त्विकी constituted of sattva, the quality of goodness XIV. iii 15

सात्वत a system of Vaisnava philosophy XVIII ii 31

सिद्ध perfect in the knowledge of the Supreme Principle XIII ii 21, X i 2

सिद्धि perfection in the knowledge of the Supreme Principle X iv 8 12, 13 XIV iii 7

सुखासन steady and comfortable posture for meditation XIII iv 5

सुमेध N of an ancient teacher of the Śākta doctrines XVIII iv 3

सुषुम्ना N of one of the important nāḍis inside the body XIII iv 15, XIV i 2, XIV ii 19

सूक्त N of one of the ten important texts of the Śaktas XVI iii 18

सूर्य deity of the name forming a divine factor in the creation III iii 13, III iv 4

सौर a religious cult with the Sun as the principal deity XV iii 21

सौर a follower of the Sūrya cult of religion XVI ii 18, XVIII i 23 XVIII ii 31

स्तवराज one of the important ten texts of the Sāktas XVI iii 18

स्वाधिष्ठान second of the six mystic circles inside the body XIV iii. 11, XIV iv 2

स्मृति a holy authoritative text based on tradition VI iv 8, IX i 2 3, 12, 14, 16

स्वायम्भुव the divine teacher of a cult with Brahmā as the supreme deity III iii 17

ह

हठयोग the practice of the path of Yoga with obstinacy or with a strong will and persistence XIII iii 1

हठयोगिन् a person who is perfect in Yoga practices by means of Hathayoga XIII i 5, 6, XV i, 35, XV ii 18 XV iv 4, 28

हयग्रीव the first advocate of the Sakta system which is summed up in the present treatise named 'Sakta-darśana' which is called *Hayagrīva-brahma-vidyā I i 15, II ii 17, II iv 16 III ii 9,* III iv 22, IX i 17, IX ii 19, IX iv 14, X iv 18 XI iv 16, XII ii 13, XII iv 8, XV iii 325, 26, XVII iv 9, XVIII iv 2, 5, 10, 12–18, 22

हयग्रीवविद्या the doctrines taught by Hayagriva XVIII iv 24-28

हयग्रीवसूत्र the Sūtra text advocating the doctrines of Hayagriva XVIII iv 7

हर one of the lords of creation V iii 12

हरि one of the lords of creation V iii 12

हस्तिजिह्वा one of the Nāḍis inside the body XIV i 4, 6 16

हिरण्यगर्भ soul immanent in the gross world I iii 1o, I iv 11, III iii 15, III iv 3, VI i 17, VII iv 20 VIII 17, 18, 19, VIII iii 2, XII iii 17

हिरण्यपुरुष the same as Hiranyagarbha, the soul immanent in the gross world I iv 18

हृच्चक्र the mystic power centre near the heart XV. i. 3, 8, 23, 18

हृदय one of the ten sacred texts of the Sākta cult. XVI. iii. 18

हैरण्यगर्भ the doctrine advocated by Hiraṇyagarbha. XVII. iv. 4

ह्रीम् the 'mystic syllable representing the Supreme Power Bhuvanasundari; symbol of the Supreme Power VII. iv. 6, VIII. ii. 27, VIII. iii. 14, 15; IX. i. 17

---

# Appendix No. II

# अगस्त्यप्रणीतं शाक्तिसूत्रम्

## विषयानुक्रमणिका

### प्रथमोऽध्यायः ( सू. १-१२६ )



### द्वितीयोऽध्याय ( सू. १-५७ )

श्रीमहादेव्यै नमः ।

श्रीमदगस्त्यप्रणीतं

# शक्तिसूत्रम् ।

## श्रीबगलामुखी प्रसीदतु ।

### प्रथमोध्यायः ।

अथातः शक्तिजिज्ञासा ॥ १ ॥ यत्कर्त्री ॥ २ ॥ यदजा

---

॥ ओं श्रीः ॥

अथातः शक्तिजिज्ञासेति सूत्रेण ग्रन्थारम्भं कृत्वा यत्कर्त्रीत्यादिभिः सूत्रैः शक्तिस्वरूपवर्णनमारभ्यते । अथशब्दो मङ्गलार्थः । आनन्तर्यप्रतिपादनार्थं प्रयुक्तश्चेन्नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसाधनसंपन्मुमुक्षुत्वं चेति शाङ्करब्रह्मसूत्रभाष्यादिषूपवर्णित साधनचतुष्टयस्य पूर्ववृत्तत्वं द्रष्टव्यम् । ग्रन्थस्यास्यागस्त्यमुनिप्रणीतस्य शक्तिसूत्रमित्येकवचनान्तप्रयोगस्तु यथा सूत्रसंघस्य ग्रन्थरूपस्य प्रकरणरूपस्य वार्थे प्रयुज्यमानः सूत्रशब्दो बहुषु ग्रन्थेषूपलभ्यते तथैव द्रष्टव्यः । यथा 'व्याकरणस्य सूत्रम्' इति पस्पशायां महाभाष्ये 'अष्टाध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम्' इति संख्यायाः संज्ञेतिसूत्रस्थकाशिकावृत्तौ च । यत्कर्त्रीति । यच्छब्दस्य सूत्रारम्भेत्र प्रयोगः, उत्तरत्र च बहुषु स्थलेषु तथैव प्रयोगः सूत्रकृतो लेखनशैली प्रदर्शयति । यच्छब्दो बहुश एतादृशस्थलेषु शक्तिवाचकतया प्रयुक्तोऽवगन्तव्यः । तथा च यत् चिद्रूपस्य परब्रह्मणः कर्त्रीत्वेन दृश्यमानं स्वरूपं दृश्यते सा शक्तिरेवेति सूत्रार्थः । यदजा । या शक्तिरजा नाम जन्मरहिताऽनादिरनन्ता च । 'अजामेकाम्' (श्वे. ४।५) 'अष्टरूपामजां ध्रुवाम्' ( चूलिकोप० ८ ) इत्याद्युपनिषत्सु अजाशब्देन प्रति

च ॥ ३ ॥ मनोयोनित्वात् ॥ ४ ॥ नान्तरायोत्र ॥ ५ ॥ तत्सांनिध्यात् ॥ ६ ॥

तत्कल्पकत्वमौपाधिकम् ॥ ७ ॥ समानधर्मत्वात् ॥ ८ ॥ तच्च प्रातिभासिकम् ॥ ९ ॥ यद्बन्धः ॥ १० ॥ यदारोपाध्यासाद्यैः ॥ ११ ॥ यच्चाधिष्ठानलिङ्गम् ॥ १२ ॥ नानात्वात् ॥ १३ ॥ तच्च कालिकम् ॥ १४ ॥ अखण्डोपाधेः ॥ १५ ॥

---

पादिता त्रिगुणात्मिका मूलप्रकृतिः शक्तिरेव न ततो भिन्ना । मनोयोनित्वात् । शक्तिरत्र मनोजन्यतया प्रतिपादिता लक्षणयैव, न वस्तुतः । मनसा प्रयुज्यमाना सा मनोजन्यतया लक्ष्यते । योनिशब्दः कारणवाची वा स्यात् कारणं च नोपादानकारणं किं तु ज्ञापकहेतुः प्रमाणं वा । तथा च ब्रह्माभिन्ना परा शक्तिरत्र मनसा ज्ञातुं शक्या मनोयोनिरिति प्रतिपादिता स्यात् । तथा च श्रुतिः —'मनसैवेदमाप्तव्यम्' (काठ. ४।११)। 'मनसैवानुद्रष्टव्यम्' (बृ. ४।४।१९) इति च । नान्तरायोत्र । अन्तरायशब्दो व्यवधानवाची । व्यवधानं चात्र देशतः, न कालतः । अन्तरे मध्ये ईयते इत्यन्तरायः । मनसः शक्तेश्च मध्ये नान्यः कोपि पदार्थः ज्ञानहेतुर्वा वर्तत इत्यर्थः । तत्सांनिध्यादित्युत्तरसूत्रेणैष एव अन्तरायाभावः सांनिध्यशब्देन प्रतिपाद्यते ॥

तत्कल्पकत्वमिति । एतदादिनवसूत्र्या वस्तुप्रपञ्चस्य बन्धस्य चोपाधिवशात्समुत्पन्नत्वेन दृश्यमानस्य प्रातिभासिकत्वं दर्शयति । अन्तर्यामिरूपतत्त्वैक्याच्चिद्रूपसमानधर्मत्वेपि अविद्यारूपशक्तेरुपाधिभूताया वशात् पदार्थानां द्व्यणुकत्र्यणुकादिभ्य उत्पन्नानां नानात्वं प्रतिभासते । तथा च गौडपादाचार्या माण्डूक्योपनिषत्कारिकासु 'कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया' इति प्रतिपादयन्ति । परिकल्पितानां प्रपञ्चगतवस्तुधर्माणां शक्तावारोपिततया नानात्वेन परिदृश्यमानैर्वस्तुभिः चिच्छक्तेरुपाधिवशाज्जायमानेन स्फुरणभेदेन प्रतिभासमानानां जीवानां बन्धः सपद्यते । भासमानं च जगदधिष्ठानभूतायाः शक्तेर्लिङ्गं नाम गमकं प्रमाणं भवति । कथमन्यथा एकमेव चैतन्यं नानात्वेन स्फुरेत् । प्रतिभासमानं वस्तुगतं नानात्वं कालशक्तेः प्रभावादेव समनुभूयते । नानात्वप्रतिभासस्य च कारणं समस्तेषु पदार्थेषु वर्तमानतया अखण्डः कालादिरूप उपाधिः ॥

यामेव भूतानि विशन्ति ॥ १६ ॥ यत्रोतम् ॥ १७ ॥ यत्प्रोतम् ॥ १८ ॥ तद्विष्णुत्वात् ॥ १९ ॥ ततो जगन्ति क्रियन्ति ॥ २० ॥ तन्मूलत्वात् ॥ २१ ॥ परिणामो लब्धेः २२ ॥

नानात्वेपि एकत्वमविरुद्धम् ॥ २३ ॥ विचारात् ॥ २४ ॥ चक्षुरीक्षते ॥ २५ ॥ यस्माद्दृश्यं दृश्यं च ॥ २६ ॥ दृष्टत्व-

---

यामेव भूतानि विशन्तीति । एतत्सूत्रादिसूत्रसप्तकेन शक्तिजगतो. संबन्ध प्रतिपादयति । यामितिपदेनात्र प्रकृतिरूपशक्तिः परामृश्यते । प्रकृतिपरिणामभूतानि सर्वाणि वस्तूनि प्रलयसमये प्रकृतिमेव प्रविशन्ति । तथा च श्रुतिः—यतो वा इमानि भूतानि जायन्ते. यत्प्रयान्ति अभिसंविशन्ति (तै. ३।१।१) इति । जगत्स्थितिकाले सूत्रे मणिगणा इव यस्या शक्तौ सर्वमोतं प्रोतं च वर्तते । तथा च विष्णुत्वात् सर्वव्यापितया सर्वेषु कार्येषु कारणतया या सर्वत्र वर्तते तन्मूलान्येव सर्वाणि भुवनानि तत्परिणामभूतान्येव न ततो भिन्नानि ॥

नानात्वेप्येकत्वमविरुद्धमिति । प्रपञ्चगतवस्तूना भिन्नभिन्ननामरूपवत्तया परिदृश्यमानेपि नानात्वे परमार्थतस्तानि सर्वाणि सद्रूपतया शक्तिरूपमेकमेव तत्त्वमिति सूत्राष्टकेन प्रदर्शयति—श्रुतयस्तु एतद्विषये 'एकं सद्विप्रा बहुधा वदन्ति', 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ २।५।१९) इत्यादयः । घटकपालादीनामनेकत्वेपि तेषु मृत्तिकेत्येकमेव तत्त्वम्। एकत्व चैतद विचारात् सिध्यति । विचारश्च वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यमित्यादि छ्पनिषद्वाक्येषु (छा ६।१।४) प्रदर्शितोत्र ग्राह्य । तत्र कार्यत्वेन भेदेपि कारणत्वेनैक्य प्रदर्शितम् । चक्षुरीक्षते । ईक्षणमत्र विचारस्वरूपम् । ईक्षतेर्नाशब्दमिति बादरायणसूत्रमूलभूता 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतिरत्र विवेचनीया । तथा च एकशक्तिरूपस्य तत्त्वस्य ईक्षणसाधनं शक्तेश्चक्षुष्ट्वेन परिगृह्य शक्तेश्चक्षुरीक्षते नाम ईक्षणं करोतीत्युक्तम् । चक्षुरीक्षतेरिति पाठ सुकरः स्यात् । तथा च ईक्षणात् कारणात् शक्तिः चक्षूरूपा गृह्येतेति तदर्थः स्यात् । शक्तेश्चक्षुषा युक्तत्वात्तत्सकाशादिद दृश्यमानं चक्षुरादिभिर्बाह्यैरिन्द्रियैः परिगृह्यमाण तथा चादृश्य मनसैव केवल परिगृह्यमाण च जगदुत्पन्नम् । मयेद दृष्टमिदमदृष्टमित्यादिव्यवहाराच्च जगदेकमनेकवस्तुसपन्नत्वेन प्रतीयते । द्रष्टृत्वव्यपदेशाद्वा इत्यपि कदाचित्पाठ.

**व्यपदेशाद्वा ॥ २७ ॥ यतस्तच्छबलम् ॥ २८ ॥ अविनाभावित्वात् ॥ २९ ॥ भिन्नत्वे वा नियाम्यत्वे ॥ ३० ॥**

**अतथाविधा ॥ ३१ ॥ यत्कृतिः ॥ ३२ ॥ इच्छाज्ञानक्रियास्वरूपत्वात् ॥ ३३ ॥ न सन्नासत् ॥ ३४ ॥ सदसत्त्वात् ॥ ३५ ॥**

---

स्यात् । यतो नानारूपत्वेनैतद्दृश्यते तत एतज्जगच्छबलतया नानारूपधारितया प्रतिभाति । शक्तेः सर्वत्राविनाभावित्वात्सर्वं जगच्छक्त्या व्याप्तमित्यर्थः । शक्तेश्च जगतः **सकाशाद्भिन्नत्वे** वा **नियाम्यत्वे** वा शक्तिरेव कारणतया वर्तते । शक्त्यैव जगद् भिन्नं भासते शक्तिरेव तस्य नियामिका वर्तते इत्यर्थः । *भिन्नत्वे वा नियाम्यत्वमिति पाठे जगतः प्रातिभासिके भिन्नत्वे सत्येवेश्वरकर्तृकं* तस्य नियाम्यत्वं भवतीत्यर्थः । तथैव भिन्नत्वं वा नियाम्यत्वे इति पाठे भिन्नत्वं *जगतः प्रातिभासिकतया जगतो नियाम्यत्वे कारणं संपद्यते इत्यर्थः ॥*

**अतथाविधा यत्कृतिरित्यादिसूत्रैः** संसारकारणं संसारस्वरूपं संसारस्य च शक्त्या सह संबन्धं प्रदर्शयति–एषा शक्तिरतथाविधा वर्तते । तथाहि— संसारस्वरूपाद्विभिन्नमेवास्याः शक्तेः स्वरूपम् । संसारोसावस्याः **कृतित्वेन** वर्तते । *इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिश्च संसारस्वरूपतया वर्तन्ते । तथा च* श्रुतिः—न ‘ तस्य (भुवनेशस्य) कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ’ तत्र इच्छा एवं स्रष्टव्यमित्यादिरूपा तदैक्षत बहु स्यां प्रजायेयेत्यादिश्रुत्युक्ता । ज्ञानं स्वबुद्धिविषय आलोचनव्यापारो यः सर्वज्ञः सर्वविदित्यादिश्रुतिषु निदर्शितः । **क्रिया** सृष्ट्यादिक्रिया ‘ अप एव ससर्जादौ तासु बीजमवासृजत् ’, ‘ तस्माद्वा एतस्मादात्मन आकाशः संभूतः’ इत्याद्युपनिषद्वाक्येषु प्रसिद्धा । **न सन्नासदिति** सूत्रेण जगतोऽनिर्वचनीयत्वं ख्यापयति । तस्य च **सदसत्त्वादिति** उत्तरसूत्रं हेतुभूतत्वेन निर्दिशति । यद्यपि सूत्रद्वयेनैतेन मायोपादानकस्य प्रपञ्चस्य शांकरमतप्रसिद्धमनिर्वचनीयत्वमेव प्रतिपादितं तथा च मायोपादानकस्य प्रपञ्चस्य भुवनसुन्दरीसृष्टस्य च जगतः साम्यमपि निदर्शितं तथापि सृष्टेरादिकारणस्वरूपे मतभेदः स्पष्ट एव । शांकरमते ब्रह्मणः सकाशान्न भिन्ना नाप्यभिन्ना अत एवानिर्वचनीया मायाशक्तिर्जगत उपादानकारणं प्रदर्श्यते । शाक्तदर्शने तु सत्स्फुरणरूपा भुवनसुन्दरी चिच्छक्तिरेवोपादानकारणं प्रदर्श्यते सदसद्रूपतया भासमानस्यानिर्वचनीयस्यास्य प्रपञ्चस्य । ‘ तदनन्यत्वमारम्भण-

तद्भ्रान्तेः ॥ ३६ ॥ यत्सत् ॥ ३७ ॥ लीयते ॥ ३८ ॥ तन्नैकदेशप्रवादः ॥ ३९ ॥ यस्मात्तारतम्यं जन्तूनाम् ॥ ४० ॥ साम्यं जननमरणयोः ॥ ४१ ॥ पौनःपुन्यात् ॥ ४२ ॥ यदेव संसारः ॥ ४३ ॥

ऊर्णनाभिः इव ॥ ४४ ॥ सादृश्यानन्त्यम् ॥ ४५ ॥

---

शब्दादिभ्यः' इति बादरायणसूत्रेण तथैव 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्याद्युपनिषद्वाक्यैश्चैतदेव प्रतिपादितम्। जगतः सत्त्वं चैतन्यापेक्षया, असत्त्वं च विनाशस्वभावयुक्तघटादिपदार्थापेक्षया च स्पष्टमेव। एतदेव परिदृश्यमानं जगतः स्वरूपं भ्रान्तिकृतमेवेति प्रतिपादयति तद्भ्रान्तेः इति सूत्रेण। यत्सत् इति सूत्रेण सत्स्वरूपं मूलकारणं प्रदर्श्यते। इदं सर्वं यदयमात्मा, सदेव सोम्येदमग्र आसीत्, ऐतदात्म्यमिदं सर्वं, ब्रह्मैवेदं सर्वम् इत्यादिश्रुतय एवात्र प्रमाणम्। लीयते इत्यनेन प्रलये सृष्टिविनाशकाले सर्वं ब्रह्मणि लीयते सद्रूपं च सर्वं भवति इति प्रतिपाद्यते। श्रुतिषु च 'मयि सर्वं लयं याति' (के. १५) 'रात्र्यागमे प्रलीयन्ते' (भ. गी. ८।१८) 'नारायणे प्रलीयन्ते' (नारा. १) इत्यादिभिः प्रलयसमये सर्वासां प्रजानां लयः प्रतिपादितः। तन्नैकदेशप्रवादः' 'यस्मात्तारतम्यं जन्तूनाम्' इति सूत्रद्वयेन चिच्छक्तेरंशत्वेनैव सर्वत्र स्थितिर्जन्तूनां तारतम्ये नाम ज्ञानस्य हीनमध्यमोत्तमस्वरूपविषये कारणं भवतीत्युक्तम्। 'साम्यं जननमरणयोः' इति सूत्रेण स्थितिकाले ज्ञानानुभवसुखदुःखादिभेदे समुपलभ्यमानेपि सर्ववस्तूनां जननमरणविषये तथा च प्रलयकाले कर्मबीजोपाधेर्लीयमानत्वात् साम्यमेव परिदृश्यते इति प्रतिपाद्यते। कर्मानुभवस्य नियतत्वात् पुनःपुनर्जन्मरूपं पौनःपुन्यं संपद्यते। ततश्च न सर्वथा मोक्षः संपद्यते कस्यापि सर्वकर्मक्षयाद्विना। इदं च पुनःपुनर्जन्मरूपं जन्तूनां सर्वेषां वस्तूनां चोत्पत्तिप्रणाशौ संसारत्वेन प्रतिपाद्यन्ते 'यदेव संसारः' इति सूत्रेण॥

'ऊर्णनाभिः' इत्यादिसूत्रैः 'यकर्त्री' इति सूत्रे 'कर्त्री' इति शब्देनोक्तायाः शक्तेः सकाशात्कथं विश्वं प्रादुर्भवतीति प्रतिपाद्यते। तत्र 'ऊर्णनाभिः' इति सूत्रेण शक्तेर्जगत्कारणत्वमूर्णनाभिदृष्टान्तेनोच्यते। 'यथोर्णनाभिः सृजते गृह्णते च ... तथाक्षरात्संभवतीह विश्वम्' (मु० १।७)

**तत्सिद्धिरेव तत्सिद्धेः ॥ ४६ ॥ तदैक्यात् ॥ ४७ ॥ तच्चैतन्यभेदे प्रमाणम् ॥ ४८ ॥ तद्बुद्धेः ॥ ४९ ॥ तन्नाशे तन्नाशः ॥ ५० ॥**

**यस्याः सर्वं पर्वणि पर्वणि ॥५१॥ भूतभौतिकौ च ॥५२॥ अन्यथा ज्ञेयत्वाभावात् ॥५३॥ तन्निर्लेपः पुष्करपर्णतलवत् ॥५४॥**

---

'स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणा व्युच्चरन्ति' ( बृ. २।१।२० ) 'ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि। जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः॥' इत्यादिश्रुतयोऽत्र प्रमाणमनपेक्ष्य बाह्यं कारणं विचित्रतन्तुनिर्माणे दृष्टस्योर्णनाभेः सामर्थ्यस्य सत्त्वे। '**साद्दश्यानन्त्यम्**' इति सूत्रेण नैकशरीरनिर्माणसमर्थो योगी, प्रासादादिनिर्माणसमर्थः सूत्रकारो, घटनिर्माणकुशलः कुलालस्तत्समाना इतरेपि तत्तद्वस्तुजनने समर्थाः प्रतिनिर्दिश्यन्ते। जगन्निर्मात्र्याः शक्त्याः प्रपञ्चविषयकज्ञानसिद्धेरेव प्रपञ्चसिद्धिर्भवति। तस्या **ऐक्यमेव चैतन्यभेदे प्रमाणम्**। चिच्छक्तिरेका वर्तते प्रपञ्चगतप्राणिनां च समुपलभ्यते बहुत्वम्। चैतन्यभेदं विना यतो बहुत्वं नोपपद्यते तस्माज्जीवे जीवे अंशैरंशैर्वर्तमानं भिन्नमेव चैतन्यम्। तथा च 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति भगवद्गीतायामुक्तं जीवानेकत्वं तथा वस्त्वनेकत्वमपि **बुद्धिनिमित्तकं** न वस्तुतः। तथा च वासिष्ठसंहितायामुक्तम्—'संकल्पमात्रकलनैव जगत्समग्रं संकल्पमात्रकलनैव मनोविलासः' इति, 'कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया' इति च गौडपादकारिकासु। **तन्नाशो** नाम भ्रमबुद्धिनाशो प्रपञ्चगतवस्तूनां नानाकारतया भासमानत्वस्य नाशः॥

'**यस्याः सर्वं पर्वणि पर्वणि**' इत्यादिसूत्रैः कदा किंरूपं च जगदुत्पद्यते तत् कथयति—पर्वशब्देनात्र प्रलयानन्तरं पुनरुत्पद्यमानायाः सृष्टेः कालक्षण उच्यते यदा कालशक्तिः प्रभवितुमारभते। प्रलये बीजरूपेण वर्तमानानि सृष्ट्यारम्भे सर्वाणि भूतानि वियदादीनि प्रादुर्भवन्ति भौतिकानि च वस्तूनि शरीरादीनि च समुत्पद्यन्ते। एतच्च सर्वं श्रुतिनिबद्धं मनसि समाधेयम्। अन्यथा ज्ञेयवस्तूनामभावाच्चिच्छक्तेः ज्ञेयपदार्थाभावे नैरर्थक्यं स्यात्। यद्यपि ब्रह्मस्वरूपभूता चिच्छक्तिः सर्वेषां वस्तूनां प्रभवित्री ज्ञात्री च तथापि पद्मपर्णतलं जलस्पर्शेपि यथा निर्लेपं तद्वत्सा निर्लेपा वर्तते। सा च चिच्छक्तिः

**सतः ॥ ५५ ॥ पुष्पगन्धवत् ॥ ५६ ॥ मुक्तः सर्वो बद्धः सर्वः ॥ ५७ ॥ यद्विलासात् ॥ ५८ ॥ तत्स्रष्टृत्वानुमितेः ॥ ५९ ॥ लिङ्गान्तरं व्यभिचरितम् ॥ ६० ॥ नो दोषः ॥ ६१ ॥**

**अविमुक्तिः ॥ ६२ ॥ यतते यत्पुराणः ॥ ६३ ॥ मुक्तोपि**

---

सर्वदा सद्रूपा। हृदयपुण्डरीके स्थिताया अपि तस्याः सामर्थ्यं यथा पुष्पगन्धः पुष्पमुत्सृज्य सर्वतः प्रसरति तथैव सा सर्वमङ्गं व्याप्नोति। शक्तेश्चास्या विलासादेव सर्वो लोक उपाधिवशाद्बद्ध इति कथ्यते उपाधिना मुक्तश्च मुक्त इति कथ्यते। वस्तुतः, मुक्तस्यापि जीवस्य शक्त्यज्ञानरूपोपाधिवशाद्बद्धत्वमज्ञाननाशे च स्वाभाविकमेव मुक्तत्वम्। तथा च श्रुतिः—'असङ्गो ह्ययं पुरुषः' इति। 'अनादिवासनासुप्तो यदा जीवः प्रबुद्धयते। अजमनिद्रमस्वप्नमद्वैतं बुद्धयते तदा' इति च गौडपादकारिकासु। एतदनुरोधेन विचारसाम्याविषये 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' ( बाद. २।३।२९ ) इतिसूत्रस्थशांकरभाष्यमवलोकनीयम्। सृष्ट्याद्युत्पत्तिस्तु शक्तेर्विलासादेव भवति। तथा च श्रुतिः— 'यतो वा इमानि भूतानि जायन्ते', 'तज्जलान्' इति च। 'लोकवत्तु लीलाकैवल्यम्' इति च बादरायणसूत्रम्। तस्याः शक्तेः स्रष्टृत्वमनुमितेरपि सिध्यति। अनुमितिरत्र स्मृतिपरा। तथा च भगवद्गीतायामुक्तम्— 'ममैवांशो जीवलोके जीवभूतः सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' इति। 'क्षित्यङ्कुरादि कार्यं कर्तृजन्यं कार्यत्वाद्घटवत्' इत्यादीन्यनुमानान्यप्यनुमितिशब्दार्थस्य निदर्शनत्वेन ग्रहीतुमत्र शक्यानि। कदाचिदितराणि लिङ्गानि नामानुमानानि व्यभिचरितानि जगति दृष्टानि इति स्मृतेरत्रानुमितिशब्देन ग्रहणं युक्ततरम्। तथा चात्र नो दोषः प्रादुर्भविष्यति। यदि कदाचित् सहकार्यपेक्षां विना न कार्यं भवतीत्युच्येत तर्हि सहकारितया अदृष्टं कल्प्येत। श्रुतयोपि 'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' तथैव 'यः पृथिव्यां तिष्ठन् ..' इत्यादयस्तत्समर्थनार्थं प्रदर्श्येरन् ॥

आ विमुक्तेः यतते यत् पुराणः। मुक्तिरनायासेनाल्पायासेन वा न साध्या। पुराणो मुनिः प्रजापतिस्तपश्चरणादिना तदर्थं यतते स्म इत्यत्र निदर्शनम्। अविमुक्तिरिति हस्तलिखिते पठ्यते। कदाचित्तत्स्थाने 'अविमुक्तः' इति स्यात्। यतते यत्पुराणः इत्यादिसूत्रैर्मुक्तेर्दुष्प्राप्यतां दर्शयति। मुक्तोपि जनो न स्वतन्त्रतया वर्तते देवी-

तद्रूहितः ॥ ६४ ॥ यत्प्रसादात्तदपि ॥ ६५ ॥ यद्विरोधात् पतत्यन्धे तमसि ॥ ६६ ॥ पानाद्युपाधेर्मिथ्यात्वात् ॥ ६७ ॥ भ्राम्यते जन्तुः ॥ ६८ ॥ भ्रश्यते स्वर्गात् ॥ ६९ ॥

अतोस्याः स्वातन्त्र्यम् ॥ ७० ॥ निर्विकारे क्रियाभावात् ॥ ७१ ॥ बन्धमोक्षयोश्च ॥ ७२ ॥ सर्वत्र चिन्त्यम् ॥ ७३ ॥ तुच्छत्वे वा निगडवत् ॥७४॥ गिलितविषवद्विरोधोपलब्धेः ॥७५॥

तद्योगात्तद्योगः ॥ ७६ ॥ संन्यस्तेपि तत्सिद्धेः ॥ ७७ ॥

---

सायुज्यं प्राप्य मणिद्वीपे स देवीसंनिधौ तद्गूहितो नाम शक्त्या रक्षितो वर्तते । तद्रक्षणमपि शक्तिरूपाया देव्याः प्रसादादेव भवति । तस्या विरोधे तु स न कदापि मुक्तो भवति किं तु अन्धे तमसि स भ्रमति । तथा चोपनिषदि 'अन्धं तमः प्रविशन्ति ये अविद्यामुपासते' इति । पानाद्युपाधेर्मिथ्यात्वात् । पानशब्देनात्र नवम्यादिपूजासु गृह्यमाणं मद्यमभिप्रेतं स्यात् । मद्यपानादीनि देव्याः पूजाद्रव्याणि संसारतरणे उपाधिभूतानि उपयुक्तानि स्युरिति चेत्तेषामुपाधीनां मिथ्यात्वमेव । पानादियुतया बाह्यपूजया जन्तुः संसारे भ्राम्यते नैव मुक्तो भवति । पानशब्देन कदाचित्सोमपानमप्यभिप्रेतं स्यात् । यज्ञकर्माङ्गभूतेन सोमपानेन न मुक्तिः संपद्येत । यद्यपि अविकलयज्ञानुष्ठानेन पुरुषः स्वर्गं यास्यति तर्हि सुकृतव्ययानन्तरं स स्वर्गाद् भ्रश्यतेैव ॥

अतोस्याः स्वातन्त्र्यमित्यादिसूत्रैः स्वव्यापारेषु शक्तेर्निरपेक्षत्वं दर्शयति—तथा च तस्या निर्गुणे निर्विकारे च स्वरूपे न कापि क्रिया संदृश्यते । बन्धमोक्षयोर्नाम जीवानां बन्धमोक्षसंपादने तस्याः सगुणस्वरूपधारित्वेन सव्यापारत्वं दृश्यत एव । पारमार्थिकव्यावहारिकभेदेन शक्तेर्निर्गुणसगुणत्वे उपपद्येते । एतच्च निर्गुणसगुणत्वस्वरूपं सर्वत्र सर्वेषु दर्शनेषु चिन्त्यं नाम विचारणीयमेव । अथ वैदिकवचनानां तुच्छत्वे प्रतिपादिते अवमानने च कृते ये तान्यवमन्यन्ते तेषां निगडवद् बन्धनं भवति न कदापि ते मुक्ता भवन्ति । तथा च ये गिलितविषा नाम पीतविषा जना इव नष्टदृष्यो वैदिकवाक्येषु विरोधं पश्यन्ति तेपि नश्यन्ति । न मुक्ता भवन्तीति यावत् ॥

अथ मुक्तिप्रकारो विविच्यते तद्योगात्तद्योग इत्यादिभिः सूत्रैः । तस्याः शक्तेर्योगान्नाम सम्यग्ज्ञानाच्छक्तेर्योगो नाम सायुज्यं प्राप्यते । तथा च

**तद्यागात्तद्योगः ॥ ७८ ॥ तद्भोगात्तद्भोगोपि ॥ ७९ ॥**
**न त्यागः ॥ ८० ॥ तद्व्याप्यत्वान्नित्यत्वाच्चेद् बन्धनैयत्यापत्तेः ॥ ८१ ॥ नास्तीति भ्रमः ॥८२॥ अस्तीत्यतिरिक्तमपि ॥८३॥**

---

सुभगोदये भास्कररायैरुक्तम्—"यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् । चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ॥ सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः । पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान् यथेप्सितान् ॥ अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम् । प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः" ॥ (ललितासहस्रनाम २९२–२९४)। 'अन्ते देहपातोत्तरम् । देवयानमार्गेण गत्वेति शेषः । सायुज्यातिदुर्लभत्वादिविशेषणानि कैवल्यत्वद्योतकानि । शिवाद्यैः प्रार्थनीयमिति तु ब्रह्मणा सह मुक्तिरिति ध्वनयितुम्' (सौभाग्यभास्कर)। तथा च श्रुतिः 'सोश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति । संन्यस्तेपि नाम सर्वकर्मसु संन्यस्तेषु तथैव शक्तिप्राप्तिरूपा सिद्धिर्भवति । संन्यासोत्र तद्योगसाधनरूपत्वेन निर्दिष्टः । कर्मसंन्यासं विना न तद्योगः शक्य इति भावः । **तद्यागान्नाम** तस्या जपोपासनादिभिः सगुणरूपस्य ध्यानादपि तद्योगो नाम सायुज्यं प्राप्यते । एवं **तद्भोगान्नाम** निर्गुणायाः शक्तेः आनन्दकारिसमाधौ तद्भोगो नाम तन्निर्गुणस्वरूपावाप्तिपरमानन्दः समुत्पद्यते ॥ एवं तद्योगात्तद्योग इत्यादिभिः सूत्रैस्त्रयाणां योगयागभोगानां श्रवणमनननिदिध्यासनरूपाणामधममध्यमोत्तमाधिकारिकृते समुपदिष्टानामत्र श्रुत्यनुरोधेन प्रतिपादनं कृतम् । तथा च श्रुतिः 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति ॥

**न त्यागस्तद्व्याप्यत्वादित्यादिभिः** सूत्रैः शक्तेः सर्वव्यापितया तद्योगयागभोगानामशक्यत्वशङ्कामुद्भाव्य तां निराकरोति — सर्वविश्वव्यापिनी शक्तिः साधकस्य स्वस्माद्भिन्नतया श्रवणमनननिदिध्यासविषया कथं भवेदित्यत्र शङ्का । न चेद्भिन्ना न च श्रवणादीनामविषयः ततो न कदापि कोपि संसारबन्धनान्मुक्तः स्याद् बन्धनैयत्यं च समापद्येतेति प्रतिबन्द्युत्तरम् । तथा च बन्धमुक्तेः श्रुतिषु प्रतिपादितत्वात् शक्तेः परिणामभूततया जगतो भिन्नत्वं स्वीकार्यमेव । भिन्नत्वज्ञानमेतन्न पारमार्थिकं किंतु व्यावहारिकम् । तथा च व्यवहारे शक्तेर्व्यतिरिक्तं किमपि **नास्तीति भ्रमः** । ततश्च **व्यतिरिक्तं किमप्यस्तीति** स्वीकार्यमेव । यद्व्यतिरिक्तं सा चिच्छक्तिरेव तत्तद्वस्तुनिर्माणसमर्था ॥

**पक्षान्तरासिद्धेः ॥ ८४ ॥ तदभावाभावात् श्रुतेः ॥ ८५ ॥ लिङ्गमलिङ्गं तल्लिङ्गम् ॥८६॥ सल्लिङ्गमलिङ्गं यस्याः प्राबल्यात्**

पक्षान्तरासिद्धेरित्यादिभिः सूत्रैः सांख्यदर्शनाभिप्रेतायाः प्रकृतेः पुरुषनिरपेक्षायाः परिणाम्युपादानकारणत्वं निराकरोति। तत्र च यद्यपि प्रकृतिशक्त्योः प्रायः पर्यायशब्दयोर्जगत्कारणत्वं परिणामिरूपतया, तथापि शाक्तदर्शनाभिमता प्रकृतिर्न चेतनांशेन रहिता, किंतु तत्सहिता चिच्छक्तिरिति शब्देन व्यवह्रियते इति स्पष्टतया प्रतिपादयति। पक्षान्तरस्य चैतन्यरहितप्रकृतेर्जगत्कारणत्वरूपस्य **न सिद्धिर्भवति**। कुतः। **चैतन्याभावस्य** कुत्रापि प्रकृतौ प्रकृतिपरिणामेषु **वा श्रुतौ अभावात्** अकथितत्वात्। सर्वत्र चैतन्यस्य वर्तमानत्वादित्यर्थः। ननु च **तल्लिङ्गं** नाम प्रकृतेर्लिङ्गं प्रमाणं त्रिगुणात्मकस्य जगतो मूलं त्रिगुणात्मकं प्रकृतिरूपं यत् सत्त्वरजस्तमसां साम्यावस्थेति वर्ण्यते तत् **लिङ्गं** वा **अलिङ्गं वा**। द्विविधमपि न युज्यते। लिङ्गते प्रकाशते इति लिङ्गमिति व्युत्पत्त्या लिङ्गशब्देनात्र बाह्येन्द्रियग्राह्यं वस्तु प्रतिपाद्यते, लिङ्गशब्दः कदाचिच्चैतन्यलिङ्गरूपत्वेन जीवपरः स्यात्। अलिङ्गपदेन उभयविरोधि बाह्येन्द्रियैरग्राह्यं बाह्याकाशादि जीवभिन्नं जडादि वा गृह्येत। लिङ्गमलिङ्गमुभे अपि जगन्मूलकारणतया प्रकृतेः स्वीकारे न प्रमाणतया गृह्येते। अथवा प्रकृतेरस्तित्वे यत्सांख्यैर्**लिङ्गतया** नाम प्रमाणतया दत्तं **तदलिङ्गमप्रमाणमेव**। हेत्वाभासबाधितत्वात्। सर्व एव घटशरावादयो बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतया अन्वीयमानाः प्रकृतिरूपसुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति। यत्तत्सामान्यं तत्प्रधानमेव। प्रधानं प्रकृतिरिति पर्यायशब्दौ। एतदनुमानमप्रमाणेव। कारणविलक्षणस्य कार्यस्य लोके दृष्टत्वात्केषुचित्पदार्थेषु च सुखदुःखमोहात्मकत्वाभावादेतदनुमानं हेत्वाभासनिबद्धमेव। एतत्सर्वं विस्तरेण ब्रह्मसूत्रशांकरभाष्ये स्पष्टम्। ( शां. भा. २।१।१-१० )। तथा च **यस्याः** प्रकृतेः **सल्लिङ्गं** नाम भेदानां परिमाणादित्यादिकारिकायां निर्दिष्टं यत् सत्कार्यत्वप्रतिपादकं लिङ्गं तदपि **अलिङ्गमप्रमाणम्**। कारणाद्विलक्षणस्य चेतनादचेतनस्याचेतनाच्चेतनस्य च वस्तुनः परिदृश्यमानत्वात्। विलक्षणत्वं चैतदस्याः शक्तेः **प्राबल्यात्**। शक्तिर्हि कदाचित्कार्ये कारणस्य विरुद्धतया परिदृश्यमानान् गुणानाविष्करोति। तेषां प्राबल्यात्कार्यं विलक्षणं परिदृश्यते। विलक्षणत्वमेतच्छक्ते-

॥ ८७ ॥ वशीकृतेशत्वात् कामिनीत्वात् मोहकत्वाद्वा ॥ ८८ ॥ यन्मातापितरौ ॥ ८९ ॥ बीजोत्पत्तेरैन्द्रजालिकत्ववत् ॥ ९० ॥ न तज्जातेः ॥ ९१ ॥ निर्गुणत्वात् ॥ ९२ ॥

तत्कामित्वात् व्यासः ॥ ९३ ॥ तत्परो जैमिनिः ॥ ९४ ॥ तत्स्वाभिन्नो हयाननश्च ॥ ९५ ॥ उक्तवानगस्त्यः ॥ ९६ ॥

---

रस्याः सत्त्वगुणकृतवशीकृतब्रह्मादीश्वरत्वात्स्यात्। तथा च रजोगुणकृतकामसंपादकत्वात्स्यात्। तथैव तमोगुणकृतमोहकत्वाद्वा भवेत्। अत एवैषा शक्तिर्मातृत्वेन पितृत्वेन च वर्णिता भवति। यथेन्द्रजालिकस्तांस्तान्पदार्थान् प्रदर्शयति तथैवेषा बीजान्युत्पादयति। यद्यप्येषा नित्या तथाप्यस्याः शक्तेः कार्यरूप तज्जगत् जातेः नाम जन्मनः सत्त्वान्नाम वर्तमानत्वान्न नित्यम्। यज्जायते तदनित्यमिति नियमात्। निर्गुणत्वात् पुनः शक्तिर्नित्यैव। तथा च श्रुतिः 'निर्गुण निष्क्रिय शान्त निरवद्य निरञ्जनम्' इति।

अत उत्तर तत्कामित्वाद् व्यासः इत्यादिसूत्रे. शाक्तदर्शनान्तर्भूतानामगस्त्यमतसदृशाना व्यासादिदर्शनाना स्वरूप प्रदशयति तेषु वर्तमान चेषन्मतभेद प्रतिपादयति। तत्र व्यास. शक्तेः कामित्वं ब्रूते। तथा च प्रपञ्चः शक्तेरिच्छया जातस्तस्मान्निर्गुणायाः शक्तेः सगुणत्व लक्षणया स्वीकार्यमिति प्रतिपादयति। जैमिनिस्तु तत्परो नाम शक्त्युपासनपरो भूत्वा वर्षशतमिष्ट्वा शक्तिज्ञानसपन्नो भूत्वा द्वादशाध्यायीसूत्र प्रणिनाय। हयाननस्तु तच्छक्तितत्त्व स्वस्माच्छरीरान्तर्यामिण आत्मन. सकाशादभिन्न मन्यते स्म। हयाननसकाशाल्लब्ध्वा शक्तिविद्यामगस्त्य' प्रकृतसूत्रप्रणेता प्रोक्तवान्। अत्र विषये—'अश्वानन महाबुद्धे सर्वशास्त्रविशारद। कथित ललितादेव्याश्चरित परमाद्भुतम् ॥१॥. इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना। प्रहृष्टो वचन प्राह तापसं कुम्भसभवम् ॥११॥ इत्यादयः श्लोका ललितासहस्रनामग्रन्थारम्भे स्थिता द्रष्टव्यास्तत्रस्था च सौभाग्यभास्कराख्याख्याऽपि द्रष्टव्या। तथा च भास्कररायकृते सौभाग्यभास्करे "अगस्त्याख्यो हि महामुनि. श्रीविद्योपासकाग्रेसरस्य भगवतो हयग्रीवस्य देशिकेन्द्रस्य मुखाद्ब्रह्माण्डपुराणीयैर्मन्त्रन्यासपूजापुरश्चरणहोमरहस्यस्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्यतोपि परमरहस्य नामसहस्रमस्तीति तपोबलादेव निश्चित्य तद्भक्तायापि मह्य किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे सदिहानः पृच्छतीत्याह भगवान् सूतः" इति ॥

तद्वेदी पैप्पलायनः ॥९७॥ कठः कर्तृत्वम् ॥९८॥ पराशरः प्राबल्यम् ॥ ९९ ॥ वसिष्ठो मोहम् ॥ १०० ॥ परमेष्ठ्यपि मोहम् ॥ १०१ ॥ शुकः स्वात्मानम् ॥ १०२ ॥ मातरं नारदः ॥ १०३ ॥

मन्वानास्तरन्ति संसारम् ॥ १०४ ॥ उक्तलिङ्गैः सद्भिः प्रमाणैः ॥ १०५ ॥ तत्तु तित्तिरिः ॥ १०६ ॥ छन्दोगाश्च

---

पैप्पलायनमुनिस्तु तच्छक्तेः स्वरूपं प्रभावं च विदितवान्। परन्तु सांख्यसिद्धान्तानुसारित्वादात्मनः कमलपत्रवन्निर्लिप्तस्यापि ब्रह्मणः प्रकृत्यात्मकर्तां प्रत्यपादयत्। आचार्यः कठस्तु शक्तेः कर्तृत्वं तुष्टाव परंतु प्रपञ्चस्य दुःखमयत्वाच्छक्तेः सृष्टस्य जगतोनुप्रवेशं तत्र नानुमेने। व्रीहियवानां पर्जन्यवच्छक्तेर्निमित्तकारणत्वमेवासौ प्रत्यपादयत्। पराशरमुनिस्तु कर्त्र्याः शक्तेः प्राबल्यात् सामर्थ्येन परमात्मा न केवलं स्वांशान्देवान्प्रजाश्च निर्ममे परंतु विलक्षणं जडस्वरूपं प्रपञ्चमपि सृष्टवान्। अथवा प्राबल्यं नामाज्ञाविशेषदायित्वं महाराजवत्। वासिष्ठो मुनिस्तु शक्तेर्विशिष्टमोहनसामर्थ्यं प्रतिपाद्य मायारूपाभिर्मोहनशक्तिभिः सर्वान् प्राणिनो वेष्टयन्त्या मायाया नाशे मुक्तिं प्रत्यपादयत्। एतदेवोक्तं शिवतत्त्वसुधानिधौ—'यस्या माया मुनीन् सर्वान् मोहयित्वावतिष्ठते' इति। पाराशरिः शुकमुनिस्तु आत्मानं नाम व्यापकं शक्तिस्वरूपमुक्त्वा सर्वव्यापकत्वेन तस्याः कर्तृत्वमाह। तत्तत्कृतपुण्यपापप्रभावादेव प्राणिनां वैषम्यं प्रतिपादयामास। तथा च बादरायणसूत्रम्—वैषम्यनैर्घृण्ये न सापेक्षत्वात्। नारदमुनिस्तु शक्तेर्मातृस्वरूपं पुरस्कृत्य तस्याः जननीवत्परमकारुणिकत्वमुक्त्वा ज्ञानावृतेभ्यो जनेभ्यो मोक्षमार्गदायित्वं प्रतिपादयामास ॥

'मन्वानास्तरन्ति संसारम्' इत्यादिसूत्रैः अधीतशाक्तदर्शनागमाः कथं संसारसागरं तरन्ति तद्दर्शयति। मन्वाना नाम ज्ञातशाक्तदर्शनाः संसारं तरन्ति। कथमित्याह—तत्र तत्रोपनिषदागमपुराणेषु उक्तलिङ्गैर्नाम संदर्शितहेतुभिः सद्भिः हेत्वाभासरहितैः प्रमाणैः प्रदर्शितं मार्गमवलम्ब्य तरन्तीति भावः। तथा चोक्तम् 'तरति शोकमात्मवित्' (छा. ७।१।२) इति। तानि प्रमाणानि तं संसारतरणमार्गं च तित्तिरिमुनिर्दर्शयामास। तथा च तैत्तिरीयोपनिषदि—'ब्रह्मविदाप्नोति परम्। तदेषाभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै. २।१।१) इति। छन्दोगाश्च तदेवाहुः 'सोहं भगवो मन्त्रविदेवास्मि

**॥ १०७ ॥ मारीचस्तद्वादी ॥ १०८ ॥ यच्छिवः ॥ १०९ ॥ हरिरन्तः ॥ ११० ॥ गुरुर्बहिः ॥ १११ ॥**

**कालो भेदे दुर्बोधः ॥ ११२ ॥ तल्लेशाः ॥ ११३ ॥ दहरव्यापित्वात् ॥ ११४ ॥ ब्रह्माण्डान्तर्व्यापित्वात् ॥ ११५ ॥ तत्परात्तद्बहिस्तत्परात्तद्बहिः ॥ ११६ ॥ एवं ब्रह्मविदः ॥ ११७ ॥**

---

नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति ' ( छा. ७।१।२ )। **मारीचस्तद्वादी** । शब्द एव ब्रह्म इति मारीचः । एवंभूतं ज्ञानेन गम्यं शब्दतत्त्वं यत् शिवः । शाब्दजन्यज्ञानमेव शिवः सुखस्वरूपभूतो वर्तते । तथा च श्रुतिः ' आनन्दो ब्रह्मेति व्यजानात् ' । हरिरन्तःकरणे गुरुः । तथा चोक्तम्— *मन एव मनुष्याणां कारणं बन्धमोक्षयोः । अन्तःकरणे एव शक्तिसाक्षात्कारः ।* शक्तिश्च मनोमयी । बहिस्तु देशिको गुरुरेव मोक्षमार्गस्योपदेष्टा ॥

इत उत्तरं जीवस्वरूपं किंचिद्विचार्य धर्माधर्मयोः चित्तशुद्धेश्च स्वरूपं विचारयति **कालो भेदे दुर्बोधः** *इत्यादि सूत्रैः* । वस्तुभेदे च कालस्य कारणत्वं दर्शयति । भेदे नाम भेदजनकत्वे काल एव कारणं स च दुर्बोधो नाम दुर्ज्ञेयः उद्बोद्धुमशक्यः । कालः क्षोभको गुणानां सत्त्वरजस्तमसां ततश्च साम्यावस्थोच्छेदाज्जगदुत्पत्तिः । जीवास्तु तस्याः शक्तेर्लेशा नाम अंशाः । तथा च श्रुतिः —'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथा क्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियान्ति ।' (मु.२।१।१) 'अंशो नानाव्यपदेशात् ' इति च बादरायणसूत्रम् (ब्रह्मसूत्र २।३।४२) । भगवद्गीतायामपि '*ममैवांशो जीवलोके जीवभूतः सनातनः* ' इत्युक्तम् । *जीवस्य परमात्मनोंशत्वे* कारणमाह—**दहरव्यापित्वादिति ब्रह्माण्डान्तर्व्यापित्वादिति** च । जीवो **दहरं** नाम हृदयाकाशं व्याप्नोति परमात्मा तु ब्रह्माण्डं व्याप्य तन्नियमयति । *दहरशब्देनात्र केचिद्विशुद्धिचक्रं केचिच्च मणिपूरं ग्रहन्ति । श्रुतौ चोक्तम्—* ' अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये संनिविष्टः ' ( काठ. ६।१७ ) तथैव-' अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहारसमन्वितो यः ' ( श्वे. ५।७ ) । एवमेव ' या देवी सर्वभूतेषु चेतनेत्यभिधीयते । नमस्तस्यै ' इत्यनेन सप्तशत्यां ( *सप्तशती अध्याय ५* ) *देव्याः सर्वचेतनव्यापित्वमुक्तम् । देवतानां* शक्तिस्वरूपाणां भूतेषु प्रवेशः 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐतरेयारण्यक २।४।२।४ )

अधर्माद्बन्धः ॥ ११८ ॥ धर्मो निवृत्तौ ॥ ११९ ॥ न मोहे हिंसा च यस्याः ॥ १२० ॥ अतश्चित्तप्रमादः ॥ १२१ ॥ मौद्गलायनिमाठरायणयोः ॥१२२॥ न हि वेदो न हि वेदो तद्विदः ॥१२३॥ विन्दति वेदात् प्रकृतिम् ॥ १२४ ॥ तरति तां तस्मात् ॥ १२५ ॥ स वै ब्रह्मभूयाय कल्पते ब्रह्मभूयाय कल्पत इति ॥ १२६ ॥

इत्यगस्त्यप्रणीते शक्तिसूत्रे प्रथमोध्यायः ॥

---

इत्यादिश्रुतिपूक्त एव । ईशस्य सर्वव्याप्तिस्तु 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिषु स्पष्टा । तदनुरोधादेवात्र शक्तेः पातालादिसत्यपर्यन्तस्य ब्रह्माण्डस्य अन्तः स्थित्वा व्यापकत्वमुक्तम् । तथा च तस्याः शक्तेः स्वरूपमपि परात् नाम अवयवध्यानात्तथा बहिरपि एकाग्रचित्तानिरोधात् ज्ञायते । सूत्रे द्विरुच्चारणाद् ध्यानमाहात्म्यं सूच्यते । एवमन्तर्बहिश्चोपासना शुकप्रभृतिभिः कृता ततश्च ते ब्रह्मविदः ब्रह्म ज्ञात्वा संसारं समुत्तीर्णाः अधर्मात्तु मायासंबन्धस्तथा संसारबन्धश्च जायते । निवृत्तौ नाम स्वाभाविकी या निषिद्धवस्तुषु प्रवृत्तिस्तस्या निवृत्तौ धर्मो भवति । तथा चोक्तम्—न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ तथैव 'लोके व्यवायामिषमद्यसेवा नित्यास्ति जन्तोर्न हि तत्र चोदना' इति च ॥ यस्या निवृत्तेरनन्तरं न मोहः संजायते न वा हिंसा भवति । अतः निषिद्धवस्तुसेवनाच्चित्तप्रमादः प्रमादाच्च पातः । चित्तप्रसाद इति पाठे निवृत्तेश्चित्तप्रसादो भवतीत्यर्थः । एतन्मतं मौद्गलायनमाठरायणयोः । एतद्दर्शनानुसारिणां तद्विदां च वेदप्रवर्तितयागादिषु नाग्रहः कदापि नाग्रहः । ते हि वेदविहितधर्मानुष्ठानेन प्रकृतिज्ञानं लभन्ते । शक्तिज्ञानलाभे च तदनन्तरं प्रवृत्ता भवन्ति । तल्लाभे च प्रकृतेः समुत्तीर्णा भवन्ति । ब्रह्मभूयाय च कल्पन्ते । द्विरुक्तिरध्यायपरिसमाप्तिं दर्शयति ॥

प्रथमोध्यायः समाप्तः ।

## द्वितीयोध्यायः

विदित्वैवं तरति ॥ १ ॥ य आत्मवित् ॥ २ ॥ जैमिनिरनात्मेति ॥ ३ ॥ गौणी चेन्न प्राचुर्यात् ॥ ४ ॥

तदभावेपि तस्मिन्नेषा प्रलये लीयते इति ब्रह्मविदः ॥ ५ ॥ अवशेषात्स विशिष्यते इति चेन्नाविशेषात् ॥ ६ ॥ अविद्याक्षयेण ब्रह्माभिधेयम् ॥ ७ ॥ अप्यन्यत्र सिद्धेः ॥ ८ ॥

आकाशशरीरित्वात् ॥ ९ ॥ आकाश एव चेन्नानन्दः स्यात्

---

### अथ द्वितीयोध्यायः

विदित्वैवं तरति इत्यादिभिः सूत्रैः जैमिनिमुन्यभिप्रेतकर्मप्राधान्यं दूषयति। एवं प्रथमाध्यायप्रतिपादित शक्तिस्वरूपं संपूर्णतया ज्ञात्वा आत्मविन्नाम ब्रह्मविच्छोकं तरति। जैमिनिमुनिरनात्मा नामात्मभिन्नं वेदविहितं यागादि कर्मैव सर्वश्रेष्ठं ब्रह्मकल्पं प्रतिपाद्य कर्मेश्वरत्वं ब्रूते। तत्र ब्रह्मस्वरूपमेव लक्षयति कर्मशब्दः सादृश्यमूलया गौण्या लक्षणया प्रयुक्त इति चेन्न। कर्मशब्दाभिधेयोर्थः प्राचुर्यात् प्रचुरतया कर्मशब्दे वर्तते आत्माभिधेयोर्थो नामात्मत्वमात्मगुणा नैव कर्मणि वर्तन्ते इत्यन्याय्यैव लक्षणा ॥

तदभावेऽपीत्यादिभिः सूत्रैः आत्मरूपायाः शक्तेः प्रकृतेः सकाशाद्भिन्नत्वं दर्शयति—तदभावेपि नाम प्रलयकाले प्रकृतेरवर्तमानत्वेपि न सर्वथा तन्नाशः किंतु आत्मनि शक्तिरूपे तस्मिन् एषा लीयते इति ब्रह्मविदो वदन्ति। आत्मप्रकृत्योर्द्वयोर्मध्ये प्रकृतेरात्मनि विलीनत्वेन केवलमात्मैव अवशिष्यते स च विशिष्यते नाम विशेषभाग्भवति इति चेन्न। निर्गुणनिरञ्जनकूटस्थतया तस्य अविशेषात्। अविद्याक्षयात्प्रकृतिः शक्तौ लीयते शक्त्या निर्गुणं ब्रह्मैवाभिधेयं भवति। अन्यत्रापि सर्वासूपनिषत्सु एवं ब्रह्माभिन्नायाः शक्तेः सिद्धिः ॥

आकाशशरीरित्वादित्यादिभिराकाशाच्छक्तेर्भिन्नत्वं प्रदर्शयति— ‘आकाशशरीरं ब्रह्म’ ( तै. १।६।२ ) इतिश्रुत्यनुरोधात् आकाशः शक्तेः शरीरतया प्रतिपादितः। अतः शक्तेराकाशशरीरित्वात् सा आकाशाद्भिन्ना। ‘आकाशो ह वै नामरूपयोर्निर्वहिता’ ( छा. ८।१४।१ ) इत्यादिश्रुत्यनुरोधा-

॥ १० ॥ तस्या एव विभूतेस्ताद्दक्त्वात् ॥ ११ ॥ नैवंवित्तु तूलवदग्नेः ॥ १२ ॥ भिन्नलिङ्गत्वाद्भेदव्यपदेशः ॥ १३ ॥ अनवगम्यत्वात् ॥ १४ ॥ प्रागाहार्यप्राक्कल्प्यप्राक्कर्म्यप्राकट्यादिभिः व्यञ्जितमभिव्यक्तम् ॥ १५ ॥ अपि च स्मर्यते ॥ १६ ॥

आनन्दायान्तर्दृष्टिः ॥ १७ ॥ बहिर्लक्ष्यम् ॥ १८ ॥ एवं गुणानुषङ्गः ॥ १९ ॥ अन्यदनन्तं गुह्यं च ॥ २० ॥ तद् गुरो-

---

दभिन्ना चेच्छक्त्या सायुज्यान्नानन्दः स्यात्। 'यदेष आकाश आनन्दो न स्यात्' (तै. २।७) इति श्रुत्यनुरोधेन आकाशस्यानन्दगुणकत्वाभावात्। **विभूतिमतः** सत्त्वस्य परमात्मनस्तेजोंशसंभवत्वेन आकाशरूपायास्तस्याः शक्तेर्विभूतेराकाशेनैव **सदृशत्वात्**। तथा च यो **नैवं** वेत्ति स **यथा अग्नेस्तूलं** झटिति दाह्यं वर्तते तथैव दाह्यो भवति। आकाशस्य शक्त्यात्मनो **भेदत्वेन व्यपदेशस्तु** आकाशसत्त्वे **भिन्नानां लिङ्गानां** नाम प्रमाणानां **परिदृश्यमानत्वात्**। सौलभ्येनानवभासमानत्वादप्यनवगम्यत्वमाकाशस्य। **अनवगम्यत्वाच्च** आत्मना सहाभेदः कैश्चित् कल्पितः स्यात्। परंतु **व्यञ्जितं** नाम अनवगम्यं वस्तु **प्रागाहार्यत्वेन** हेतुना **प्राक्कल्प्यत्वेन** वा प्राक्कर्म्यत्वेन वा अनुमेयं प्राकट्येन वा प्रत्यक्षमभिव्यक्तं भवति। **अपि च स्मर्यते** एतत् आकाशस्य आत्मनः सकाशाद् भिन्नत्वम्। तथा च 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. २।१।१), 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः' (मु. २।१।३) इत्यादयः श्रुतयः 'न वियदश्रुतेः', 'अस्ति तु,' 'गौण्यसंभवाच्छब्दाच्च' (बादरायणसूत्र २।३।१–३) इत्यादिसूत्राणि तत्स्थभाष्याणि चात्र विषयेऽवलोकनीयानि॥

**आनन्दायान्तर्दृष्टिरित्यादिभिः** सूत्रैः कथमात्मानन्दोऽनुभवितुं लभ्यते तत्प्रतिपादयति—**अन्तर्दृष्ट्या** शक्त्यात्मनो ध्यानमानन्दाय भवति। यदि **बहिर्लक्ष्यं** विभाव्य ध्यानादयः क्रियन्ते तर्हि **गुणानुषङ्गः** कर्तव्यो भवति। तथा च सगुणशक्तिरुपास्या भवतीत्यर्थः। एतत्तु संक्षेपत एवोक्तं, वक्तव्यं च पूजार्चनोपासनादिष्वेतदन्यदनन्तम्। परं तदत्यन्तं गुह्यं गोपनीयं, योग्यगुरु-

**गम्यते ॥ २१ ॥ तत्कृत्स्नादुपसंहारः ॥ २२ ॥ साक्षित्वे लौकिकं विरुद्धम् ॥ २३ ॥ श्रिया भिन्नत्वात् ॥ २४ ॥ नैव किञ्चन ॥ २५ ॥ सर्वत्वात् ॥ २६ ॥ नन्वागमः ॥ २७ ॥ प्राकृतत्वात् ॥२८॥ मौनवदुपदेशः ॥२९॥ द्वित्रिश्चतुर्भिः पञ्चीकरणम् ॥३०॥**

---

सकाशादेव तदवगम्यते । कृत्स्नाच्छक्तिपूजार्चनोपासनाविस्ताराद्यमत्र सूत्रे कृतः उल्लेखः उपसंहाररूप एव । शक्त्याः साक्षित्वप्रतिपादने लौकिकं प्रमाणं विरुद्धमेव । शक्तिर्न साक्षी किंतु शक्त्यधिष्ठितो देवः साक्षीति लोके स्थितम् । अत्र च कारणं श्रिया नाम ऐश्वर्येण भिन्नत्वं साक्षिस्वरूपस्य । शक्तिः स्वरूपतः नैव किंचन । न किंचिन्मयी वर्तते । एकैव सा । सर्वत्वात्सर्वस्वरूपत्वात् तस्याः । ननु आगम एव तद्विषये मौलिकं प्रमाणम् । प्राकृतत्वात् प्रकृतिमूलकत्वात्तस्य । आगमशब्देनात्र पुराणा आगमग्रन्था उच्यन्ते । 'भोगमोक्षप्रतिपादक आगमः' इति वाचस्पतिमिश्राः । भोगप्रतिपादकं कर्मकाण्डं चत्वारो वेदा ब्राह्मणानि च । मोक्षप्रतिपादकं ज्ञानकाण्डमुपनिषद्रूपम् । तयोरुभयोर्यत्र समन्वयतया प्रतिपादनं स आगमः प्रकृतेर्वेदोद्भवः प्राकृतः । शैवागमाः नारदपाञ्चरात्रं पुराणग्रन्थाश्चात्र आगमशब्देन गृह्यन्ते । आगमानामेषामुपदेशो मौनवत्कर्तव्यः। गुरुमुखादेवागमरहस्यं ज्ञातव्यं तच्चात्यन्तं गोपनीयम् । द्वित्रिश्चतुर्भिः पञ्चभिः पञ्चीकरणम् । पञ्चीकरणशब्देनात्र किं विवक्षितं सूत्रकारैर्न तत्समाकलयितुं सुकरम् । वेदान्तिभिरभिप्रेतं पृथिव्यप्तेजोवाय्वाकाशानां महाभूतानां मिश्रणं भौतिकेषु वस्तुषु दृश्यमानं पञ्चीकरणशब्दस्याभिधेयत्वेन प्रसिद्धम् । यदि तदेवाभिप्रेतं स्यात् प्रस्तावोऽप्याकाशविवेचनस्यास्याध्यायस्यारम्भे वर्तते इति द्वाभिः त्रिभिः चतुर्भिरिति क्रमेण पञ्चीकरणं नाम जगति वर्तमानानां सर्वेषां वस्तूनां पञ्चमहाभूतात्मकत्वमत्र गुरुसंप्रदायादवगतमिति सूत्रकारैः प्रतिपादितं स्यात् । तथा च कालकृते प्रकृतिक्षोभे समारब्धे प्रथमतः द्वाभ्यामाकाशवायुभ्यामेव जगदारब्धम् । तदनन्तरं वायोस्तेजसि संजाते आकाशवाय्वग्निभिस्त्रिभिरारब्धानि सर्वाणि भौतिकान्यभूवन् । एवमपामुत्पत्तेरनन्तरं चतुर्भिर्महाभूतैर्जगत् प्रारब्धं पृथिव्युत्पत्तेरनन्तरं पाञ्चमहाभौतिकं सर्वमभूदित्यस्य सूत्रस्यार्थः स्यात् ॥

नियमाद्यो हि शुद्धेः ॥ ३१ ॥ प्राणात्ययेपि ॥ ३२ ॥ नैव मरणम् ॥ ३३ ॥ जीवन्मुक्तेः ॥ ३४ ॥ यद्देवं तत्र तत्रोक्तम् ॥ ३५ ॥ यां विना न गतिर्गम्यते ॥ ३६ ॥ यल्लेपान्मुह्यन्ति ॥ ३७ ॥ यत्प्रसादाज्जीवन्मुक्तो जीवः परं ब्रह्मैव भवति ॥ ३८ ॥ यस्मान्न पुनर्भवः ॥ ३९ ॥ नित्यानन्दात्मकत्वात् ॥ ४० ॥ निर्विकारः सर्वभूतचैतन्यतामेति ॥ ४१ ॥ नित्यमुक्तः पूर्णो भवति ॥ ४२ ॥ निरालम्बत्वात् ॥ ४३ ॥ तद्भेदान्यतयाऽबाधितत्वात् ॥ ४४ ॥

---

अतः परं 'नियमाद्यो हि शुद्धेः' इत्यादिसूत्रैः जीवन्मुक्तिः कथं प्राप्यते कथं च ततो मुक्तो भवति तदतिलाघवेन कथयति। शुद्धेः नाम देहमनःशुद्धेरर्थे *नियमाद्यो हि पालनीयाः*। ते च यमनियमाः *प्राणात्ययेपि* न त्याज्याः। मरणं प्रकृतिः शरीरिणाम्। अतः यमनियमपूर्वकं शरीरं धारयतोन्तःकरणशुद्धिर्भवति। वासांसि जीर्णानीव देहं परित्यजतस्तस्य च न कदापि मरणमापतति जीवन्मुक्तः स भवति। अथवा प्राणात्ययेपि इति सूत्रं 'नैव मरणम्' इति सूत्रेण सह योजनीयम्। तथा च समुत्क्रान्तेष्वपि प्राणेषु न मरणं उपपद्यन्ते। न जायते म्रियते इत्यादि श्रुतयोत्र प्रमाणमित्यर्थः स्यात्। तत्र तत्रागमेषु यद्यपिभिरुक्तं तन्निर्धार्य स शक्तिज्ञानभाग्भवति। यां विना नाम यस्या ज्ञानं कृपां च विना न गतिर्नाम परा शक्तिर्गम्यते। यस्या एव लेपान्नाम पूजार्चनोपासनादिकाभावे वर्तमानेन अज्ञानलेपेन जना मोहं प्राप्नुवन्ति। यस्याश्च प्रसादाज्जीवन्मुक्तो भूत्वा परं ब्रह्मैव भवति। न च पुनर्जन्म प्राप्नोति। मुक्तौ च नित्यानन्दात्मको ब्रह्मरूपो निर्विकारः सर्वभूतचैतन्यस्वरूप एव भवति। पुनर्जन्मराहित्येन सदा मुक्तः पूर्ण एव भवति। पूर्णत्वे हेतुर्निरालम्बत्वादिति। शक्तिस्वरूपः सन् पूर्णः स न किंचिदप्यालम्बते। सर्वं तदात्मकमेव। अतस्तद्भेदान्यतया नाम भेदकृतसद्वितीयतया सोऽबाधितो भवति। तथा च श्रुतिवाक्यम् 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति॥

तत्तत्प्रकरणम् ॥ ४५ ॥ विभिन्नप्रमेयत्वात् ॥४६॥ विद्याश्च विद्याश्च प्रत्यक्षाद्यैरुपलभ्यन्ते ॥ ४७ ॥ विलक्षणा हि प्रकृतिः ॥ ४८ ॥ पुरुषवत् ॥ ४९ ॥ श्रुत्यगोचरत्वात् ॥ ५० ॥ तन्मुक्तौ न वैलक्षण्यं नाविलक्षण्यं तत्क्षणे ॥ ५१ ॥ श्रुतिस्मृतिपुराणेभ्यः ॥ ५२ ॥ आनन्दतारतम्यं च कोशाभिमानात् ॥ ५३ ॥ भिन्नवद्यपदेशः ॥ ५४ ॥ निस्संशयः सिद्धान्तः ॥ ५५ ॥ सर्वदुःखोपरमः श्रेयान् मोक्षः ॥५६॥ तत्सर्वं प्रकृतेरविद्याविलासात् ॥५७॥

*इति श्रीमदगस्त्यमहर्षिप्रणीते शक्तिसूत्रे द्वितीयोध्यायः ॥*

---

तत्तत्प्रकरणमित्यादिभिः सूत्रैः शक्तेरद्वितीयत्वेपि कथं जगति भेदबुद्धिर्वर्तते कथं वा अविद्याविलासभूता भिन्नभिन्ना विद्या उपासनाप्रकाराश्च शास्त्रे निर्दिष्टाः समुपपद्यन्ते तत्कथयति । अविद्याविलासाद्धि (सू.५७) लोके प्रमेयाणां पदार्थानां विभिन्नत्वात् तन्निरूपणे कर्तव्ये बहूनि प्रकरणानि भवन्ति तत्तत्प्रकरणेषु प्रतिपादिता विद्याश्च विभिन्नाः प्रत्यक्षादिप्रमाणैरुपलभ्यन्ते । प्रकृतिर्हि स्वभावेन कार्योत्पत्तौ च नूनं विलक्षणा यथा पुरुषो नाम आत्मा । परंतु सा न श्रुतिगोचरा । न सा श्रुत्या सद्वस्तुत्वेन प्रतिपाद्यते । अत एव विवेकतस्तज्ज्ञानेन तन्मुक्तौ तत्क्षये नात्मनो वैलक्षण्यमवैलक्षण्यं वा । श्रुतिस्मृतिपुराणेभ्यश्च तज्ज्ञानं संपद्यते । शक्तेर्यथावज्ज्ञानात्पूर्वं ज्ञानमार्गे स्थितानां जनानामानन्दे तारतम्यं नाम न्यूनाधिकता यावदन्नमयादिकोशानामभिमानोनुवर्तते तावत्संजायते । शक्तेरहं भिन्नोस्मीति प्रतीतिर्भवति, शक्तिस्वरूपे तज्ज्ञातसाधनेषु नैव कोपि संशयः । मोक्षविषये सिद्धान्तस्तु सर्वदुःखोपरमो मोक्षः स्वर्गादपि श्रेयानिति । ऐहलौकिकं जीवितं सुखदुःखोपभोगादि सर्वं प्रकृतेरविद्याविलासादेव ॥

॥ इति द्वितीयोध्यायः ॥

## तृतीयोध्यायः

प्रकृतिर्द्विधा ॥१॥ सा बन्धमोक्षयोर्हेतुः ॥२॥ धर्मान्मोक्षोऽधर्माद्बन्धः ॥ ३ ॥ धर्मः प्रवृत्तिनिवृत्त्योः ॥ ४ ॥ अधर्मोन्धंतमसः ॥ ५ ॥ प्रकृतिर्लीलाकैवल्यम् ॥ ६ ॥ कैंकर्यमात्मावित्त्वाय ॥ ७ ॥ उपायनकृत्त्वात्पापनिवृत्तिः ॥ ८ ॥ चतुःषष्ट्यङ्गसंमतत्वात् ॥ ९ ॥ गायत्र्या प्रतिज्ञा ॥ सावित्र्या मननम् ॥ ११ ॥ सरस्वत्या स्तवः

---

### अथ तृतीयोध्यायः

प्रकृतिर्द्विधेत्यादिभिः सूत्रैः प्रकृतिस्वरूपं विवेचयति—अत्रैव प्रस्तावे 'प्रकृतिर्लीलाकैवल्यम्' (सू. ६) इति प्रकृतेर्व्याख्यानं परिदृश्यते । पारमेश्वरी लीलैव केवला प्रकृतिशब्देनोच्यते नेतरत्किमपि । सा हि लीला जगद्वैचित्र्यनिर्माणकरी बन्धस्य जन्तोर्मोक्षस्य च द्वयोरपि हेतुभूता द्विविधा वर्ण्यते । धर्मान्मोक्षः अधर्माच्च बन्धो भवति । धर्मो द्विधा पुण्यकर्मप्रवृत्तिरूपः पापाचरणनिवृत्तिरूपश्च । अधर्मोन्धतमसकल्पः । एषा द्विविधा प्रकृतिः केवलं परमेश्वर्या लीला । तत्र प्रकृतेः संनिधौ जीव आत्मस्वरूपसाक्षात्कारार्थं किंकरभावेन वर्तते । न तत्र तं स्पृशति पापं यतोऽसौ सर्वं कर्म ईश्वरार्पणबुद्ध्या करोति । सर्वमपि तस्य कर्म चतुःषष्ट्यङ्गानुरोधेन वर्तते । चतुःषष्ट्यङ्गशब्देनात्र प्रायः चतुःषष्टितन्त्रागमग्रन्था निर्दिष्टा इति भाति । ते च वामकेश्वरतन्त्रानुरोधेन महामायातन्त्रं, त्रीणि शंबरतन्त्राणि, असिताङ्गाद्यं भैरवाष्टकं नाम ग्रन्थाष्टकं, तथैव ब्राह्मीमाहेश्वरीत्यादिपरकं बहुरूपाष्टकं, यामलाष्टकं, पूर्वाम्नायादयः इत्यादयो वर्तन्ते । भास्कररायैरेतेषां ललितासहस्रनामव्याख्यायां निर्देशः कृतः । इतरैरपि निर्दिष्टा एते ग्रन्थास्तेषां स्वरूपं तत्र तत्र द्रष्टव्यम् । ग्रन्थेष्वेतेषु व्यावहारिक्यः पारमार्थिक्यश्च विद्याः प्रतिपादिताः । तथैव ब्रह्मस्वरूपं शक्तिस्वरूपं जगतः सृष्टिस्तस्य च संहार इत्येते विषया निरूपिताः । आचारभेदात् तान्त्रिकाणां सप्त प्रकारा उपलभ्यन्ते । ते च तान्त्रिका वैदिकाचारयुक्ताः वैष्णवाचारयुक्ताः शैवाचारयुक्ताः दक्षिणाचारयुक्ताः, वामाचारयुक्ताः सिद्धान्ताचारयुक्ताः कुलाचारयुक्ताश्च । एषु ग्रन्थेषु *गायत्री–सावित्री–सरस्वतीलक्ष्मीपार्वतीनामकानि*

॥ १२ ॥ लक्ष्म्या पूजा ॥ १३ ॥ पार्वत्या परमार्थः ॥ १४ ॥ तद्धि ह्रींकारे क्षरत्वाक्षरत्वयोः योगो मुद्रा ॥१५॥ ध्यानं तर्पणम् ॥ १६ ॥ क्षीरैर्विप्राः ॥ १७ ॥ घृतेन क्षत्राः ॥ १८ ॥ मधुना विशः ॥ १९ ॥ मद्येन तदन्ये ॥ २० ॥ सर्वेपि मुमुक्षवः ॥ २१ ॥ प्रकृतिं प्रत्यग् ध्यात्वा पुनःपुनर्भक्त्या क्रमेणैव विधिवदुपासते ॥२२॥ एकेन द्वाभ्यां ते त्रिभिश्चतुर्भिर्मुक्ताः प्रकृतेर्भवेयुः ॥ २३ ॥ कल्याणकृतो हि भवान्द्रव उत्तमः ॥ २४ ॥

तत्र केचन वामेन प्रकृतिं दक्षिणेन पुरुषं संधाय यजन्ति

---

शक्तिस्वरूपाणि देवतात्वेन प्रतिज्ञामननस्तवपूजापरमार्थकृते गृहीतानि दृश्यन्ते। ह्रींकारस्तु सर्वत्र प्रधानतया निर्दिष्टस्तत्र क्षरत्वाक्षरत्वयोः कृतो योग एव मुद्रा। शक्तेर्ध्यानमेव वस्तुतस्तर्पणम्। द्रव्यैरेतत्कार्यं चेद् ब्राह्मणाः क्षीरेण देवीं तर्पयेयुः। क्षत्रियाः घृतेन, वैश्या मधुना। तदन्ये नाम त्रैवर्णिकेभ्योन्ये एव मद्येन तर्पयेयुः। मुमुक्षव एते प्रत्यक्प्रकृतेर्ध्यानेन भक्त्या च प्रकृतेः पञ्चाङ्गानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि विधिवदुपासते। उपासनाफलं च क्रमेण पृथिवीतत्त्वादनन्तरं जलतत्त्वात्तदनन्तरं तेजस्तत्त्वादिति क्रमेण पञ्चतत्त्वमय्याः प्रकृतेर्मुक्ता भवन्ति। मुक्तिश्चैषां न सपादि, किंतु क्रमेण पृथिवीलोके वरुणलोके आदित्यलोके वायुलोके शक्तिलोके च जन्म लब्ध्वा प्रथममेकेन पृथिवीतत्त्वेन मुक्तास्तदनन्तरं पृथिव्यद्भ्यां तदनन्तरं पृथिव्यप्तेजोभिस्त्रिभिस्ततश्च पृथिव्यप्तेजोवायुभिश्चतुर्भिर्मुक्ताः प्रकृतेर्मुक्तप्राया एव देवीलोके तिष्ठन्ति। पूर्णमुक्तिस्तु आकाशतत्त्वान्मुक्तेरनन्तरमेव। अयं च मोक्षक्रमो 'द्वित्रिश्चतुर्भिः पञ्चीकरणम्' (अ. २ सू. ३०) इत्यत्र सूत्रे निर्दिष्टात्सृष्टिक्रमाद्विरुद्धतया व्युत्क्रमेणेति विभावनीयम्॥

तत्र केचन वामेनेति सूत्रैर्वाममार्गतो दक्षिणमार्गप्राशस्त्यं वर्णयति- प्रकृतिपुरुषस्वरूपभेदं तथा च धर्मार्थकाममोक्षरूपं पुरुषार्थचतुष्टयं मनसि विभाव्य अर्थकामसाधकत्वेन प्रकृतिं वामेन संधाय केचिद् यजन्ति धर्ममोक्षसाधकत्वेन च पुरुषं दक्षिणेन मार्गेण संधाय यजन्ति। यद्यपि पुरुषार्थचतुष्टय-

॥ २५ ॥ न तत्कर्म ॥ २६ ॥ तुच्छत्वात्तमोयोग्यत्वात् ॥ २७ ॥ दाक्षिण्यं श्रेयः ॥ २८ ॥ संस्कुर्यात् पञ्चधा ॥ २९ ॥ वायुदक्षिणो हि स्वतः शुद्धः ॥ ३० ॥ दक्षिणेन दक्षिणो भवति ॥ ३१ ॥ मनो दक्षिणा ॥ ३२ ॥ मनसैव सर्वं तरति ॥ ३३ ॥ निश्चयो दक्षिणा ॥ ३४ ॥ निश्चयेन सर्वमाप्नोति ॥ ३५ ॥ भक्तिर्दक्षिणा ॥ ३६ ॥ भक्त्या भयं तरति शोकं च ॥ ३७ ॥ दीक्षा दक्षिणा ॥ ३८ ॥ दीक्षया कलुषान्मुच्यते ॥ ३९ ॥

---

साधकतयैतत्कर्म भवति तथापि वाममार्गाचरणकर्म न सुकृतं भवति । तद्धि तुच्छं संसारभ्रमणफलतया मोहात्मकतया तमोयोग्यमेव नामाज्ञानान्धकारकृततया वेदनीयमेव । दाक्षिण्यं नाम दक्षिणमार्ग एव सर्वथा श्रेयान् । '*संस्कुर्यात्पञ्चधा*' इत्यनेन सूत्रेण पञ्चमहाभूतप्रतिनिधिपूजाद्रव्यैः पूजार्चनोपासनाध्यानानि स्वसामर्थ्यानुसारेण स्थूलसूक्ष्मबीजभूतैः कुर्यादिति प्रतिपाद्यते । तत्र च दक्षिणः पन्था इति दक्षिणशब्देन निरुक्तकारयास्कपद्धत्या सूचितं दक्षिणाशब्दं गृहीत्वा अर्चनोपासनविधिषु नानाविधाः प्रकल्प्या दक्षिणाः कथयति । तत्र पृथिव्यप्तेजोद्रव्यसंमोहादात्मानं विमुच्य वायुरूपदक्षिणामुपासनायां प्रकल्पयति । स स्वत एव शुद्धः । न तस्येतरेषां शोधकद्रव्याणां शुद्धिसाधनानां वा अपेक्षा । दक्षिणेन नाम दक्षिणनाडीप्रयुक्तेन वायुना स दक्षिणो नाम दक्षिणासंपन्नो भवति । यद्वा दक्षिणशब्दो लिङ्गव्यत्ययेन दाक्षिणामभिदध्यात् । मनो दक्षिणेत्यनेन भिन्नानामिन्द्रियाणां मनोभावानां वा दक्षिणारूपं प्रतिपादयति । देवतासक्तं मन एव दक्षिणात्वेन बोध्यं यतो मनसैव विशुद्धेन सर्वं प्रपञ्चसागरं तरति । अथवा निश्चयो बुद्धेः शक्त्युपासनाकर्मणि निश्चय एव दक्षिणा स्यात् । संशयराहित्यरूपेण निश्चयेन हि नरः सर्वमाप्तुं समर्थो भवति । अथवा भक्तिः शक्तेः पूजार्चनाविधिपरतैव दक्षिणा भवति यतो भक्त्या भयं शोकं च तरति । मनोनिश्चयभक्तिशब्दैरत्र यथासंख्यं मनोबुद्धीन्द्रियाणां सुकृतकर्मणि दृढा प्रवृत्तिरभिप्रेता । एतत्सर्वं दीक्षा गृहीता चेत्सुकरं भवतीति दीक्षा दक्षिणात्वेन प्रतिपाद्यते । दीक्षया हि कलुषात्पापान्मुक्तो भवति ॥

पादुकास्मृतिर्दक्षिणा ॥ ४० ॥ पादुकास्मृतेरिष्टसिद्धिर्भवति ॥ ४१ ॥ दक्षिणा ह्यन्तर्यागबहिर्यागौ ॥ ४२ ॥ तदुभयस्मात् ॥ ४३ ॥ तर्पणं दक्षिणा ॥ ४४ ॥ तेन तृप्तिमुपेष्यति ॥ ४५ ॥ जपो दक्षिणा ॥ ४६ ॥ जपाद्बन्धो नश्यति ॥ ४७ ॥ अनुसंसारादनुसृतिः ॥ ४८ ॥ अनुसंधानाज्जन्मान्तरभङ्गः ॥ ४९ ॥ प्रारब्धागामिसंचितानां प्रारब्धस्यानुभवादेव नाशः ॥ ५० ॥ स हि प्रकृतेर्विलासः ॥ ५१ ॥ अहंता प्रकृतिः ॥ ५२ ॥ प्रथमं प्रकृतिं मनसा विभाव्य तामपि स्वात्मनि स्वात्मानं तस्यां मिथो विलाप्य तत एकोवशिष्यते ॥ ५३ ॥ मुक्तः शुद्धः पूर्णः प्रत्यागात्मैव भवति प्रत्यगात्मैव भवति ॥ ५४ ॥

इति श्रीमदगस्त्यमहर्षिप्रणीते शक्तिसूत्रे तृतीयोऽध्यायः ॥

---

दीक्षानन्तरं पूजार्चनोपासनाविधिः संक्षेपतो निर्दिश्यते। तत्र परंपरया गुरुश्रेष्ठस्य पादुकास्मरणं दक्षिणा। पादुकास्मृतेर्हि इष्टसिद्धिर्भवति। तथैव अन्तर्यागबहिर्यागौ नाम मानसी पूजा बाह्यपूजा चापि दक्षिणा। उभयस्मात् बाह्याभ्यन्तरपूजाभ्यां तत्सिद्धिरिष्टसिद्धिः संपद्यते। क्रमेण तत्र दक्षिणा वर्ण्यते। बाह्यपूजायास्तर्पणं दक्षिणा यया देवता तृप्तिमुपेष्यति भक्तं च तृप्तं करिष्यति। मानसपूजाया दक्षिणा तु,जपो यस्मात्संसारबन्धो विनश्यति। अनुसंसारात्संसारमनुसृत्य कृतात् ऐहिकफलदायकबाह्यपूजाविधेः फलमनुसृतिर्नाम कर्मानुगुणं सरणं संसार इति यावत्। देव्या उपासनेन कृतादनुसंधानाज्जन्मान्तरभङ्गः पुनर्जन्माभावोऽपुनरावृत्तिः। प्रारब्धकर्मणामागामिकर्मणां तथा संचितकर्मणां नाशः प्रारब्धकर्मणोनुभवादेव भवति। कर्मणामनुभवः किल प्रकृतेर्विलसनं क्रीडेति यावत्। प्रकृतिः खलु अहंतारूपा। अहंतायास्तत्र प्राधान्यात् प्राधान्येन व्यपदेशः। कथं प्रकृतेर्विलयनं ततो मुक्तिश्च भवति तत्कथयति—प्रथमं प्रकृतिं मनसा विभाव्य बुद्धौ सम्यगाकलय्य ततस्तां स्वात्मनि विलाप्य स्वात्मानं च तस्यां विलाप्य मिथो विलयनादेकोऽवशिष्यते। सोवशिष्टः शक्तिरेव मुक्तः शुद्धः पूर्णः प्रत्यगात्मेत्यभिधीयमानो भवति। प्रत्यगात्मैव भवति प्रत्यगात्मैव भवतीति द्विरुक्तिरध्यायपरिसमाप्तिनिर्दर्शिका ॥

॥ इति तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥

तस्यायं दीक्षाक्रमः ॥ १ ॥ यश्च दीक्षापरः ॥ २ ॥ मनूपदेष्टारं गुरुमीशं मनुते ॥ ३ ॥ गुरुरेव सर्वदेवात्मा ॥ ४ ॥ गुरुशासनं वेदशासनम् ॥ ५ ॥ गुरुचरणतीर्थं गङ्गा ॥ ६ ॥ गुरुपादजपांसुर्भस्म ॥ ७ ॥ गुरुपूजा सर्वदेवपूजा ॥ ८ ॥ गुरुस्मरणं सर्वदेवस्मरणम् ॥ ९ ॥ गुरुरात्मवतां शास्ता ॥ १० ॥ गुरुदर्शनं सर्वदेवदर्शनम् ॥ ११ ॥ तारकम् ॥१२॥ संसारोत्तारकम् ॥ १३ ॥ गुरुतोपणं सर्वदेवतोपणम् ॥ १४ ॥ मुद्रा पुनरुत्पत्तिमुद्रा ॥ १५ ॥ लक्ष्यं स्वात्मानि ॥ १६ ॥ शिरो गुरुपादे ॥ १७ ॥ श्रोत्रं गुरुवाक्ये ॥ १८ ॥ चक्षुर्गुरुसाक्षात्कारे ॥ १९ ॥ वाक् पञ्चदश्याम् ॥२०॥

---

### अथ चतुर्थोऽध्यायः

**तस्यायं दीक्षाक्रम** इत्यध्यायादिभूतेनानेन सूत्रेण दीक्षाविवेचनरूपोस्याध्यायस्य विषय उपक्रम्यते । **यश्च दीक्षापरः** स **मनूपदेष्टारं** नाम मन्त्रोपदेष्टारं गुरुमीशतया मन्यते । कथमिति चेदुच्यते–गुरुः किल सर्वेषां देवानामात्मा । **गुरुशासनं वेदशासनम्** । तत्सारभूतत्वात् **गुरुचरणतीर्थो**दकं किल गङ्गैव । **गुरुपादजपांसुर्नाम** गुरुपादस्थिता रजःकणा **भस्मैव** । कदाचिद् गुरुपादपङ्कजपांसुरिति पाठः स्यात् । **गुरुपूजा सर्वदेवपूजा** । **गुरुस्मरणं सर्वदेवस्मरणम्** । **गुरुरात्मवतां** निगृहीतेन्द्रियमनोबुद्धीनां साधकानां **शास्ता** अनुशासकः। **गुरुदर्शनं सर्वदेवदर्शनम्** । इदं **गुरुदर्शनं** तारकं नाम **संसारोत्तारकम्** । तारकशब्दोत्र तायिशब्दपर्यायः । **गुरुतोपणं सर्वदेवतोपणम्** । गुरुस्तुष्टः सम्यक्स्यात्तर्हि सर्वे देवास्तुष्टाः सन्तीति भावयेत् । गुरूपदेशानुरोधेन कृता **मुद्रा** ननु **पुनर्जन्मने** कृता **मुद्रा** नाम निरोधचिह्नं भवति । न स पुनरावर्तते । गुरोरधीतस्य मन्त्रस्य जपे **स्वात्मानि लक्ष्यम्** । स्वात्मान मनसि ध्यात्वा जपः कर्तव्य इति भावः । **गुरुपादे शिरो**वनमनं कार्यम् । **गुरुवाक्ये श्रोत्रं** प्रवर्तयेत् । तथा **गुरुसाक्षात्कारे चक्षुः** प्रवर्तयेत् । **पञ्चदश्यां** नाम ( ओं ) कएईलह्रीं हसकहलह्रीं सकलह्रीं इति पञ्चदशाक्षरे मन्त्रे **वाचं**

चित्तं बीजे ॥ २१ ॥ करस्तर्पणे ॥ २२ ॥ कायः श्रीपादुकार्चने ॥ २३ ॥ यद्भावनोपनिषदि ॥ २४ ॥ शरीरं श्रीचक्रम् ॥ २५ ॥

शम्भुरात्मा ॥ २६ ॥ मनः प्रकृतिः ॥ २७ ॥ बुद्धिर्विद्या ॥ २८ ॥ इच्छा लक्ष्मीः ॥ २९ ॥ जाठरोग्निर्विष्णुः ॥ ३० ॥ वैदिकं कर्म ॥ ३१ ॥ यावज्जीवमुपासनम् ॥ ३२ ॥ सद्भिः सङ्गः ॥ ३३ ॥ स्त्रीसामान्ये मातृभावः ॥ ३४ ॥ जायां विना सर्वदा शान्तिः ॥ ३५ ॥ अलंकारस्तोपाय ॥ ३६ ॥ धौतं च सितं चैलम् ॥ ३७ ॥ सुमगन्धताम्बूलानि नित्यं सेव्यानि ॥ ३८ ॥

---

निदध्यात् । एतस्य मन्त्रस्य बीजे चित्तं समादधीत । करं तर्पणे नियुञ्जीत कायं च श्रीदेवीपादुकार्चने । एतत्सर्वं यदत्रोच्यते तद् भावनो१निषदि सम्यक्पठितम् । शरीरं श्रीचक्रम् । तथा च तत्रोक्तम्—ॐ श्रीगुरुः सर्वकारणभूता शक्तिः । तेन नवरन्ध्ररूपो देहः । नवशक्तिरूपं श्रीचक्रम् । वाराही पितृरूपा । कुरुकुल्ला बलिदेवता माता । पुरुषार्थाः सागराः । देहो नवरत्नद्वीपः । आधारनवमुद्राः शक्तयः । ... क्रियाशक्तिः पीठम् । कुण्डलिनी ज्ञानशक्तिर्गृहम् । इच्छाशक्तिर्महात्रिपुरसुन्दरी । ज्ञाता होता । ज्ञानमग्निः । ज्ञेयं हविः । ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ।...... एवं मुहूर्तत्रयं भावनापरो जीवन्मुक्तो भवति । तस्य देवतात्मैक्यासिद्धिः । चिन्तितकार्याण्ययत्नेनैव सिध्यन्ति । स एव शिवयोगीति कथ्यते । कादिहादिमतोक्तेन भावना प्रतिपादिता । जीवन्मुक्तो भवति य एवं वेदेति ॥

शम्भुरात्मेत्यादिसूत्रैः कथंरूपा भिन्नाभिन्नदेवतानां भावना कार्या देहावयवेषु कथं च वर्तितव्यं तत्कथ्यते । मनः प्रकृतिरिति भावयेत् । बुद्धिर्विद्याशक्तिरिति भावयेत् । इच्छा लक्ष्मीर्देवतेति भावयेत् । जाठरोग्निर्विष्णुरिति भावयेत् । वैदिकमेव कर्म कार्यम् । यावज्जीवं शक्तेरुपासनं कार्यम् । सद्भिरेव सङ्गः कार्यो नासद्भिः । स्त्रीसामान्ये नाम सर्वासु स्त्रीषु मातृभावेन वर्तितव्यम् । जायां विना सर्वदा सर्वकालं शान्तिः कार्या । नान्यासु कासुचित्स्त्रीषु दृष्टासु कामवासनया मनःक्षोभो भवेदिति शान्तो दान्तः श्रियमुपासीत । आत्मनस्तोषायैव अलङ्कारान् धारयेत् । मनःप्रसन्नतायै शुचिर्भूत्वा धौतं सितं चैलं वस्त्रं धारयेत् । कुसुमगन्धताम्बुलानि मनःप्रसन्नतार्थं नित्यं सेव्यानि । भुवो-

भ्रुवोर्मध्ये श्रीपादुकार्चनप्रसादः ॥ ३९ ॥ संमोदं वा ॥ ४० ॥ मन्त्राभिमन्त्रितानि सेव्यानि ॥ ४१ ॥

सर्वं जगत् प्रकृतिमयम् ॥ ४२ ॥ एष ब्राह्मणविकारः ॥४३॥ सर्वं खल्विदं ब्रह्म ॥४४॥ नैव नानास्ति किंचन ॥४५॥ अहमिति भावयेत् ॥ ४६ ॥ अष्टाङ्गयोगैरिष्टार्थसिद्धिः ॥ ४७ ॥ संसार्यप्यसंसारी ॥ ४८ ॥ कुर्वन् कर्माणि न लिप्यते ॥ ४९ ॥ चित्तैकाग्र्यं सर्वत्र साधनम् ॥५०॥ सर्वार्थसिद्धयो हि तेन ॥५१॥

एषा हि शाक्ता दीक्षा ॥ ५२ ॥ नित्यकर्माविरोधेन ॥५३॥

---

मध्ये ललटस्याधोभागे श्रीपादुकार्चनप्रसादः कुङ्कुमादिरूपो धारणीयः। संमोदं वा धारणीयम्। मन्त्राभिमन्त्रितानि नाम मन्त्रैः परिपूतान्येव सेव्यानि सर्ववस्तूनि ॥

सर्वं जगत् प्रकृतिमयं वर्तते। ब्रह्मणश्च सर्व एष विकारः। सर्वं खल्विदं ब्रह्म। अहं ब्रह्मास्मि। इत्येषा भावना स्थिरीकर्तव्येति संक्षेपतः प्रतिपाद्य शाक्तया दीक्षया दीक्षितस्य अष्टाङ्गयोगसाध्यदीक्षाफलं विवेचयति—**सर्वं खल्विदं ब्रह्म। नैव नानास्ति किंचन।** तथा चोक्तम्—'सर्वं खल्विदं ब्रह्म' (छा. ३।१४।१) नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। (बृ. ४।४।१९) 'एकमेवाद्वितीयम्' (छा. ६।२।१)। **अहमिति सर्वं भावयेत्।** सर्वत्र आत्मरूपोऽहमस्मि इति भावनां विदध्यात्। **अष्टाङ्गयोगैरिष्टार्थसिद्धिः।** अष्टाङ्गयोगपरेणैव दीक्षितेन वर्तितव्यम्। तत्र कौलमतानुसारिभिर्यमनियमाः सर्वदा पालनीयाः। मिश्रमतानुयायिभिर्यमनियमासनादीनि षड् योगाङ्गानि आचरितव्यानि। सामयिकमतानुयायिभिरष्टाङ्गयोग आचरितव्य इति विवेकः। **संसार्यपि** अष्टाङ्गयोगपरो **नरोऽसंसार्येव।** कथमिति चेदुच्यते—स हि वेदविहितानि **कर्माणि कुर्वन्न लिप्यते। चित्तैकाग्रता** हि प्रधानं साधनं **सर्वत्र।** यतस्तेन साधनेन विना न कदापि **सर्वार्थसिद्धिलाभः** ॥

**एषा हि शाक्ता दीक्षे**त्यादिभिः सूत्रैर्दीक्षितः कथं वर्तेतेति निरूप्य वामदक्षिणमार्गयोस्तारतम्यमुक्त्वा दक्षिण एव मार्गः संसारसागरोत्तारणे स्वीकार्य इति स्वसिद्धान्तं द्रढयति—**एषा हि** वर्णिता **शाक्ता दीक्षा।** अनया सह श्रुतिस्मृतिविहितनित्यकर्मणां न कोपि विरोधः। तथा च न कदापि अभक्ष्याणि

नाभक्ष्याणि भक्षयेत् ॥ ५४ ॥ न नीचैः सह वसेत् ॥ ५५ ॥ न निषिद्धं निषेवेत ॥ ५६ ॥ यद् गायत्री माता ॥ ५७ ॥ सर्वत्र वेदः प्रमाणम् ॥ ५८ ॥ धर्मो हि वर्णाश्रमोचितः ॥ ५९ ॥ दीक्षाभङ्गे पापीयान् भवति ॥ ६० ॥ पतत्येव चिरं निरये ॥ ६१ ॥ विधिवद् दीक्षित उभयत्र नित्यं सुखमश्नुते ॥ ६२ ॥ एष दक्षिणः पन्थाः ॥ ६३ ॥ ब्राह्मणादीनां त्रयाणां तारतम्योचितः ॥ ६४ ॥ शूद्रपाषण्डप्रभृतीनां वामः पन्थाः ॥ ६५ ॥ तत्र महिमा गरीयान् कलौ प्रकृतिप्रसादतः ॥ ६६ ॥ पुरुष विन्देत् ॥ ६७ ॥ नान्यः पन्था विद्यतेऽयनाय ॥ ६८ ॥

इतिश्रीमदगस्त्यमहर्षिप्रणीते शक्तिसूत्रे चतुर्थोऽध्यायः ॥

---

भक्षयेत्। तया च नीचैः सह न कदापि वासं कुर्वीत। निषिद्धाचरणं न कदापि निषेवेत। सर्वदा गायत्रीमन्त्रो मातृतया भावनीयः। सर्वथा सर्वत्र वेद एव प्रमाणम्। नान्यदनुमानादिगम्यम्। वर्णाश्रमधर्माः सर्वदा पालनीयाः। दीक्षाया भङ्गे पापीयान् भवति नरः। न केवलं पापीयान्भवति किंतु चिरं निरये नाम नरकलोके पतति। विधिवद् दीक्षितो दीक्षानियमपालनेन विधिमनुसृत्य पूजोपासनादि कुर्वाण उभयत्र इह परत्र च नित्यं सुखमश्नुते। एष वर्णितः सर्वो दक्षिणः पन्थाः। ब्राह्मणादीनां त्रयाणां पूजार्चनादिद्रव्यविषये तारतम्येनोपलक्षित एष दक्षिणो मार्गो विहितः। शूद्रपाषण्डप्रभृतीनां वामो मार्गः। वामे मार्गे प्रकृत्याराधनतः कलियुगेऽस्मिन्गरीयान्महिमा क्षुद्रलौकिकसिद्धिसंपत्तिरूपः। तथापि दक्षिण एव मार्गः स्वीकार्यः। तेनैव पुरुषं विन्देत्। नान्यः पन्था विद्यते अयनाय। दक्षिणेन मार्गेण विना न कोपि ऋजुरन्यः पन्था मोक्षगमनाय विद्यते। उक्तमेतच्छ्वेताश्वतरोपनिषदि 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' (श्वे. ३।८) इति शम् ॥

॥ इति चतुर्थोऽध्यायः ॥

इति श्रीमद्विद्वन्मुकुटरत्नभास्करशास्त्र्यन्तेवासिसकलविद्यापारंगतरामशास्त्रिच्छात्रवर्यमहामहोपाध्यायवासुदेवशास्त्रिसूनुना महामहोपाध्यायकाशिनाथशास्त्रिणा विरचिता श्रीमदगस्त्यमहर्षिप्रणीतस्य शक्तिसूत्रस्यलघुवृत्तिः समाप्तिमगमत् ॥

## Amendments made in the text of the manuscript

| | Original reading | Amendment made |
|---|---|---|
| अ. १ सू. ५४ | पुष्करवर्णतत्त्वत् | पुष्करपर्णतलवत् |
| अ. १ सू. ७८ | तयागात्तयागः | तयागात्तयोगः |
| अ. २ सू. १५ | प्रागाहार्यप्रात्कल्प्यप्राकर्म्य-प्राकट्यादिभिः | प्रागाहार्यप्राक्लप्यप्राकर्म्यप्राकट्यादिभिः |
| अ. २ सू. ४३ | तद्भेदान्यतमाबाधितत्वात् | तद्भेदान्यतयाऽबाधितत्वात् |
| ,, ,, ५२ | आनन्दतारतम्याश्च | आनन्दतारतम्यं च |
| अ. ३ सू. ८ | उपानक्रत्वात् | उपायनक्रत्वात् |
| ,, ,, २२ | विधिवदुपासन्ते | विधिवदुपासते |
| ,, ,, ४८ | अनुसंसारानुसृतिः | अनुसंसारादनुसृतिः |
| ,, ,, ५३ | प्रथमं प्रकृतिमसां विभाव्योतामपि | प्रथमं प्रकृतिं मनसा विभाव्य तामपि |
| अ. ४ सू. ६२ | दीक्षितो उभयत्र | दीक्षित उभयत्र |

*N. B.*— Scribal errors and evident mistakes are all corrected. They are not noticed as amendments.

---



सा कार्यशक्तिः ॥१२॥ कारणं भुवनसुन्दरी परा शक्तिरिति ॥१३॥

इति श्रीशाक्तदर्शने द्वितीयाध्यायस्य तृतीयः पादः ।

अथ चतुर्थः पादः

कालः कारणम् ॥१॥ स साक्षी ॥२॥ तदधीना माया ॥३॥ निमित्तं कालः ॥४॥ मायोपादानम् ॥५॥ कालाधीनं जगत् ॥६॥ कालो गरीयान् ॥ ७ ॥ नियामकः ॥ ८ ॥ काल एवेश्वर इति याज्ञवल्क्यः ॥ ९ ॥ न कालः कारणम् ॥ १० ॥ चिन्मायायोगः कालः ॥ ११ ॥ अतः कालकारणं माया ॥ १२ ॥ मायागतं ब्रह्म शक्तिः ॥१३॥ कालद्वारा शक्तिः ॥१४॥ न स्वतन्त्रः कालः ॥१५॥ शक्तिः स्वतन्त्रेति हयग्रीवः ॥ १६ ॥

इति श्रीशाक्तदर्शने द्वितीयाध्यायस्य चतुर्थः पादः ॥

द्वितीयाध्यायः समाप्तः ॥

---

( शिव. १६ )। शिवशक्तिस्तु कार्यशक्तिः कारणशक्तिर्भुवनसुन्दर्येव ॥

इति गौतममतनिरासो नाम दशम प्रकरणम् ॥

अथ कालकारणत्ववादिनो याज्ञवल्क्यस्य मतं निरूप्यते '**कालः कारणम्**' इत्यादिना । याज्ञवल्क्यमते काल एव सर्वेषां मूलकारणम् । स एव च साक्षिरूपेण तिष्ठति । प्रपञ्चोपादानभूताया मायायाः प्रपञ्चकार्य स निमित्तकारणं भवति । कालः सर्वेषां श्रेष्ठः सर्वेषां च नियामकः ।

इति याज्ञवल्क्यमतनिरूपणं नामैकादशं प्रकरणम् ॥

अथ याज्ञवल्क्यमतं निराक्रियते—'**न कालः कारणमित्यादिना**'। कालो न कदापि स्वतन्त्रः । चिन्मायायोग एव कालशब्देनोच्यते । तथा च मायैव कालस्य कारणम् । शक्तिश्च मायागत ब्रह्म । शक्तिः कालद्वारा प्रवर्तते । अत एव न कालस्य स्वातन्त्र्येण कारणत्वम् ॥

इति याज्ञवल्क्यमतनिरासो नाम द्वादशं प्रकरणम् ॥

द्वितीयाध्यायः समाप्तः

## अथ तृतीयोध्यायः।

मायोपहितः साक्षी ॥ १ ॥ स वै गणेशः ॥ २ ॥ तदधीना माया ॥ ३ ॥ कालश्च ॥ ४ ॥ मायागततदाभास ईश्वरः ॥ ५ ॥ अविद्यागतो जीवः ॥ ६ ॥ गुणकालमायाः पञ्च देवाः ॥ ७ ॥ गुणास्त्रयः ॥ ८ ॥ माया शक्तिः ॥ ९ ॥ कालः पुरुषः ॥ १० ॥ पञ्चजनको गणेशः ॥ ११ ॥ स एव कारणम् ॥ १२ ॥ कार्यमयाः पञ्च ॥ १३ ॥ कार्यं स्वेच्छया च ॥ १४ ॥ न गुणैः ॥ १५ ॥ न मायया ॥ १६ ॥ न कालेन ॥ १७ ॥ न कारणं शक्तिः ॥ १८ ॥ कारणं गणेश एवेति ॥ १९ ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥

### अथ द्वितीयः पादः

गणेशशब्दवाच्यो गजवदनाद्यवयवयुतो गणपतिः ॥ १ ॥ लक्ष्यः साक्षी ॥ २ ॥ शक्तिशब्दवाच्या भुवनेश्वरी ॥ ३ ॥

---

अथ तृतीयोध्यायः।

अथ गणेशजगत्कारणत्वं पूर्वपक्षरूपेण प्रतिपाद्यते—**मायोपहितः साक्षी स वै गणेशः** इत्यादिना। अस्मिन्मते मायोपहितः साक्षी गणेशः मूलकारणं, मायाकालौ तदधीनौ, मायागतस्तदाभास एवेश्वरो जीवस्तु अविद्यागतस्तदाभास इति प्रतिपाद्यते। **गुणकालमाया** इति। सत्त्वरजस्तमोरूपाणां त्रयाणां गुणानां शक्तिशब्दप्रतिपाद्यमायायाः पुरुषशब्दप्रतिपाद्यकालस्य च गणेश एवोत्पादकः स एवातः सर्वेषामादिकारणं, स च स्वेच्छया स्वातन्त्र्येण सर्वं कार्यजातं प्रवर्तयति ॥

इति गणेशजगत्कारणत्वनिरूपणं नाम त्रयोदशं प्रकरणम् ॥

गणेशजगत्कारणत्वं निराकरोति—**गणेशशब्दवाच्य** इत्यादिना। गजवदनादियुतो गणपतिर्गणेशशब्दस्य वाच्यार्थः। लक्ष्यार्थत्वेन गणेशशब्दः साक्षिणं प्रतिपादयति। अतो गणेशः साक्षी। शक्तिशब्दस्य वाच्यार्थरूपा भुवनेश्वरी। लक्ष्यार्थतया भुवनेश्वर्या अपि साक्षित्वम्। गणेशो भुवनेश्वरी चोभावपि साक्षिणौ

लक्ष्यः साक्षी ॥ ४ ॥ शक्तिर्मायामयत्वात् स्वेच्छया साकारं सिध्येत् ॥ ५ ॥ साक्षिणोर्मायायामेव भेदः कार्ये ॥ ६ ॥ कार्यमूर्तिर्मायास्वीकृतदेहपुत्रत्वात् शक्तिपुत्रः ॥७॥ न कारणत्वं कार्यस्य ॥८॥ अतः कारणं शक्तिरेवेति हयग्रीवः ॥ ९ ॥

इति तृतीयाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः।

न केवलं शक्तिः कारणम् ॥ १ ॥ मायोपहितः पारमार्थेशः ॥ २ ॥ मायाशबलो व्यावहारिकः ॥ ३ ॥ साभासा मायाशक्तिः ॥ ४ ॥ मायासाक्षियोगः कालः ॥ ५ ॥ पारमार्थो गणेशः ॥६॥ शक्तिकालेशगणपतिसमवायो जगत्कारणेशः ॥७॥ न पारमार्थो गणपतिः केवलं जगत्कर्ता ॥ ८ ॥ न कालः ॥ ९ ॥ न शक्तिः ॥ १० ॥ न व्यावहारिकः ॥ ११ ॥ कारणे चैकत्वे कार्ये षड्भेदात् ॥ १२ ॥ गणपतिसूर्यब्रह्मविष्णुरुद्रशक्तिरिति ॥ १३ ॥

---

कारणरूपतया नैव भिन्नौ। मायारूपकार्ये वर्तमानयोस्तयोर्भेदः। कार्यमूर्तिर्गणेशो मायया देहस्वीकाराच्छक्तिपुत्र इति कथ्यते। वस्तुतो न तस्य कारणत्वम्। सर्वकारणत्वं शक्तेरेवेति सूत्रोपदेष्टा हयग्रीवः॥

इति गणेशजगत्कारणत्वनिरासो नाम चतुर्दशं प्रकरणम् ॥

अथ स्वायंभुवमतं प्रतिपादयति—**न केवलं शक्तिः कारणमित्यादिना**। स्वायंभुवमते न शक्तिरेव कारणम्। गणपतिसूर्यब्रह्मविष्णुरुद्रशक्तिरूपाणि षट् कार्योत्पादने कारणानि। पारमार्थो गणेशः पञ्चधात्मानं कृत्वा स्वयं च षष्ठो भूत्वा स्वशक्तिं व्यापार्य करणत्वेन च शक्तिकालेशान् गृहीत्वा गणपतिसूर्यब्रह्मविष्णुरुद्रशक्तिरूपद्वारषट्केन सृष्टिं निर्ममे। **मायोपहित इति**। मायोपाधिको

स्वशक्तिं पञ्चद्वारा ॥ १४ ॥ हिरण्यगर्भो विधिरेव ॥ १५ ॥ पञ्च स्वेच्छया च ॥ १६ ॥ जगत्कर्तेश्वरः पञ्चधा तिष्ठतीति स्वायंभुवः ॥ १७ ॥

इति तृतीयाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः ।

ईश्वरास्त्रिधा ॥ १ ॥ कार्यकारणपारमार्थभेदात् ॥ २ ॥ कार्यं हिरण्यगर्भः ॥ ३ ॥ शिवविष्णुशक्तिसूर्याः कारणम् ॥ ४ ॥ गणेशः पारमार्थः ॥ ५ ॥ नाभ्यन्तं स्थूलप्रपञ्चः ॥ ६ ॥ हृदन्तं सूक्ष्मम् ॥ ७ ॥ कण्ठान्तं कारणम् ॥ ८ ॥ तदूर्ध्वं तुरीयम् ॥ ९ ॥ कारणेशस्य वामाङ्गं शक्तिः ॥ १० ॥ कालो दक्षिणम् ॥ ११ ॥ नाभ्यन्तं ब्रह्मा ॥ १२ ॥ मुखं विष्णुः ॥ १३ ॥ नेत्रं रुद्रः ॥ १४ ॥

---

गणपतिः पारमार्थेशः । मायया शबलो व्यावहारिकः । मायारहितश्च पारमार्थो नाम परं तत्त्वम् ॥

इति स्वायंभुवमतनिरूपणं नाम पञ्चदशं प्रकरणम् ॥

पारमार्थगणेशस्वरूपं निरूपयति—ईश्वरास्त्रिधेति । गणेशः परतत्त्वस्वरूपः जगद्रूपकार्यतया वर्तमानो हिरण्यगर्भ इति वर्ण्यते । कारणत्वेन वर्तमानः शिवविष्णुशक्तिसूर्यात्मकचतुष्प्रकारो भवति । मूर्तिं दधानस्य तस्य नाभिपर्यन्तं वर्तमानो देहदेशः स्थूलप्रपञ्चत्वेन वर्ण्यते । नाभितो हृदयपर्यन्तं सूक्ष्मप्रपञ्चः । तदनन्तरं कण्ठान्तं कारणरूपप्रपञ्चः । तदूर्ध्वं तुरीयमात्मस्वरूपम् । इत्येवं ब्रह्माण्डविस्तारस्य गणेशदेहत्वेन कल्पनां कृत्वा तस्य वामाङ्गे शक्तिकल्पना क्रियते दक्षिणाङ्गे च कालः कल्प्यते । एवं निखिलप्रपञ्चस्वरूपं गणपतिं देहं प्रकल्प्य तदधिष्ठातृदेवताः कल्पयति—नाभ्यन्तं ब्रह्मेति । एवं चतुर्णां देवानामधिष्ठानं

तदूर्ध्वं गणेशः ॥ १५ ॥ एवं कारणे ॥ १६ ॥ कार्ये भिन्नत्वे च षडात्मक ईश्वर एव जगत्कर्तेति बादरिः ॥ १७ ॥ साक्ष्यादिकारणं ब्रह्मनिष्ठा शक्तिरेव ॥ १८ ॥ कारणेशजननी ॥ १९ ॥ ईशनिष्ठा व्यक्तकारणम् ॥ २० ॥ अव्यक्तस्य ब्रह्मनिष्ठा ॥ २१ ॥ शक्तिरेव सर्वकारणमिति हयग्रीवः ॥ २२ ॥

इति श्रीशाक्तदर्शने तृतीयाध्यायस्य तुरीयः पादः ॥

तृतीयाध्यायः समाप्तः ॥

---

कारणरूपदेहे। कार्यदेहस्तु स्थूलप्रपञ्चसूक्ष्मप्रपञ्चकारणतुरीयशक्तिकालरूपत्वेन षडात्मक ईश्वरस्वरूपो जगतः कर्तेति बादरिमतम् ॥

इति बादरिमतनिरूपणं नाम षोडशं प्रकरणम् ॥

एवं बादरेराचार्यस्य मतं स्वायंभुवमतस्य सदृशमपीषद्भिन्नं प्रदर्श्य द्वयोरपि निरासं करोति सूत्रकारः—साक्ष्यादिकारणमित्यादिना। ब्रह्मनिष्ठा शक्तिरेव वस्तुतः साक्षी आदिकारणं च। वृथैव गणेशकल्पनाप्रयासः। एषा शक्तिरेव कारणेशस्य जननी। एतस्मिन्कारणेंशे स्थिता शक्तिरेव व्यक्तस्य जगतः कारणम्। अव्यक्तस्य सूक्ष्मस्य जगतः कारणं तु ब्रह्मनिष्ठा शक्तिः। एवं सर्वस्य प्रपञ्चस्य शक्तिरेव कारणमिति नैव युक्ता पारमार्थगणेशकल्पना न वा गणेशदेहरूपब्रह्माण्डकल्पना ॥

इति स्वायंभुवबादरिमतनिरासो नाम सप्तदशं प्रकरणम्।

तृतीयोध्यायः समाप्तः ॥

## अथ चतुर्थोऽध्यायः ।

कारणं शक्तिः ॥१॥ भुवनेश्वरी ॥२॥ व्यक्ताऽव्यक्ता ॥३॥ अव्यक्ता कारणात्मिका ॥ ४ ॥ भक्तेच्छोपात्तदेहा व्यक्ता ॥ ५ ॥ त्रयः कार्यमूर्तयः ॥ ६ ॥ स्रष्टा ब्रह्मा ॥ ७ ॥ पालको विष्णुः ॥ ८ ॥ रुद्रो हर्ता ॥ ९ ॥ कर्मबध्यो लिङ्गदेहः ॥ १० ॥ अज्ञानमयं कारणम् ॥ ११ ॥ अज्ञानेन कर्मबध्यो जीवः कालात्मकं चक्रं युञ्जति ॥ १२ ॥ ज्ञानेनाज्ञाननाशः ॥ १३ ॥ न कर्मणा ॥ १४ ॥ नोपासनेन ॥ १५ ॥ मलमोचने निष्कामकर्म ॥ १६ ॥ विक्षेपमुपासनम् ॥ १७ ॥ अज्ञानरूपावरणमोचने ज्ञानमेव ॥ १८ ॥

इति श्रीशाक्तदर्शने तुरीयाध्यायस्य प्रथमः पादः ॥

---

अथ चतुर्थोऽध्यायः ।

प्रथमद्वितीयतृतीयाध्यायेषु पराशरगौतमयाज्ञवल्क्यादीनां मतानि निरस्याधुना संक्षेपतः स्वमतमाचष्टे—कारणं शक्तिरिति। भुवनेश्वरीनाम्नी शक्तिरेव सर्वप्रपञ्चस्यादिकारणम् । तस्या द्वे स्वरूपे । कारणात्मकमव्यक्तस्वरूपम् । भक्तेच्छानुसारतो गृहीतं व्यक्तस्वरूपम् । ब्रह्मविष्णुरुद्ररूपास्तस्याः कार्यमूर्तयः । अज्ञानावृतः कर्मबद्धो जीवः कालचक्रे युज्यते। ज्ञानेनैव च कर्मणो नाशः। विक्षेपमुपासनमिति। न कर्मणा न वोपासनेन अज्ञाननाशः। निष्कामकर्मणा केवलं मलनाशः स्यात्। केवलोपासनमपि न ज्ञानहेतुः प्रत्युत तेन चित्तविक्षेपोपि कदाचिद्भवेत्। विक्षेपस्य स्वरूपं "व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः (पात यो॰सू॰ १।३०) इत्येतस्मिन्पातञ्जलयोगसूत्रे प्रतिपादितम् । तत्रैव च दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः कथिताः। विक्षेपमुपासनमिति पाठो भ्रष्ट इति शक्यते वक्तुम्। तत्स्थाने विक्षेपमोचने उपासनमिति मूलपाठः स्यात् । तथा सत्येवास्याध्यायस्य तृतीयपादे 'उपासनं विक्षेपशान्त्यै' इति पठितं नवमं सूत्रं सुसंगतं स्यात् ॥

इति व्यक्ताव्यक्तस्वरूपशक्तिनिरूपणं नामाष्टादशं प्रकरणम् ॥

अथ द्वितीयः पादः

**प्रमाणं वेदाश्च ॥१॥ स्मृत्यादयोपि ॥२॥ कर्म त्रिधा ॥३॥ नश्येत् संचितं ज्ञानेन ॥ ४ ॥ नागामिनि संबन्धः ॥ ५ ॥ प्रारब्धं भोगेन ॥ ६ ॥ निषिद्धविहितभेदात् ॥ ७ ॥ नित्यनैमित्तिककाम्य-प्रायश्चित्तानि विहितानि ॥ ८ ॥ नित्यं न काम्यफलदम् ॥ ९ ॥ अकारणात् पातं च ॥ १० ॥ नित्यवन्निमित्तेषु नैमित्तिकम् ॥ ११ ॥ कामाप्त्यै काम्यम् ॥ १२ ॥ प्रायश्चित्तं पापनाशाय ॥ १३ ॥**

**इति श्रीशाक्तदर्शने तुरीयाध्यायस्य द्वितीयः पादः ॥**

अथ तृतीयः पादः

**न कदापि[१] निषिद्धम् ॥ १ ॥ मलनाशाय कर्म न काम्यम् ॥ २ ॥ प्रायश्चित्तं द्विधा ॥ ३ ॥ उद्दिष्टपापनाशकम-**

---

अथ प्रमाणभूतवेदस्मृतिप्रतिपादितकर्मभेदान् विवेचयति-**प्रमाणं वेदाश्चेति**। प्रतिपाद्यशाक्तदर्शनविषये वेदस्मृत्यादयः प्रमाणम्। कर्मणो भेदान् दर्शयति—**कर्म त्रिधेति**। संचितमागामि प्रारब्धं चेति त्रिविधं कर्म। तत्र ज्ञानेन न केवलं संचितकर्मणो विनाशः, किं तु आगामिकर्मणोपि नोत्पत्तिः। प्रारब्धस्य तु भोगेन नाशः। अन्येन प्रकारेण कर्मभेदं दर्शयति-**निषिद्धविहितभेदादिति**। विहितकर्मणो भेदान् दर्शयति। —**नित्येति**। नित्यस्य कर्मणो न किंचिदपि फलम्। केवलं तस्याकरणे प्रत्यवायः। अकारणात्पातं चेति भ्रष्टः पाठो दृश्यते। अकारणान्नाम अकरणात् पातं नाम पातः भवेदित्यर्थेन अकारणात्पातं चेति पाठो व्याख्यायेत। पातमिति सामान्ये नपुंसकम्। **नित्यवदिति**। निमित्तेषु क्रियमाण निमित्तकर्म नित्यवन्न फलहेतुः। किं तु तेन प्रत्यवायराहित्यम्। **कामाप्त्यै काम्यमिति**। ईप्सितकामप्रात्यर्थं काम्यं कर्मापि कर्तव्यमेव। तथैव पापनाशाय प्रायश्चित्तमपि कर्म कर्तव्यम्। एतेन विहितानि चतुर्विधान्यपि कर्माणि कर्तव्यानि, न तेषां त्यागः कार्य इति सूचितम्। ज्ञानानन्तरं तु तस्य स्वभावत एव च्युतिर्भवेदित्यग्रे (४।३।२) वक्ष्यते। **न कदापीति**। निषिद्धं कर्म न कदापि कर्तव्यम्। **मलनाशायेति**। मल-नाशायेत्यस्यानन्तरं निष्कामं कर्मेत्यध्याहार्यम्। अथवा मलनाशाय कर्म न काम्यमित्येकमेव सूत्रं प्रकल्पयितुं शक्यम्। **द्विधेति** साधारणासाधारणेति द्विविधं प्रायश्चित्तम् ॥

इति कर्मनिरूपणं नामैकोनविंशं प्रकरणम् ॥

साधारणम् ॥ ४ ॥ सर्वपापघ्नं साधारणम् ॥ ५ ॥ काण्डत्रययुता वेदाः ॥ ६ ॥ कर्मकाण्डं मलनाशाय ॥ ७ ॥ उपासनं विक्षेपशान्त्यै ॥ ८ ॥ ज्ञानमावरणनाशाय ॥ ९ ॥ त्रिवर्णिनो वेदाधिकारिणः ॥१०॥ न शूद्रो वेदाधिकारी ॥११॥ न स्वयंस्मृत्यादीन् पठेत् ॥ १२ ॥ श्रवणं द्विजेभ्यः ॥ १३ ॥

इति श्रीशाक्तदर्शने तुरीयाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः

न स्वयं त्यजेत कर्म ॥१॥ ज्ञानारूढे च्युतिं स्वयमेव ॥२॥ श्रुतिस्मृतिपुराणेषु वर्णधर्माः ॥३॥ श्रुत्यागमपुराणेषु मतधर्माः ॥४॥ सामान्यः सर्वेषु ॥ ५ ॥ नित्ये नित्यम् ॥ ६ ॥ निमित्ते नैमित्तिकम् ॥ ७ ॥ श्रवणादीनि सर्वदा ॥ ८ ॥

इति श्रीशाक्तदर्शने तुरीयाध्यायस्य चतुर्थः पादः ॥

चतुर्थाध्यायः समाप्तः ॥

---

अधुना कर्मसंबन्द्धं वेदकर्मकाण्डं विविच्यते—काण्डत्रययुता वेदा इति। कर्मोपासनाज्ञाननामकानि त्रीणि वेदकाण्डानि । तेषां कर्मनाशार्थं ज्ञानावाप्त्यर्थं चोपयुक्ततां दर्शयति— कर्मकाण्डं मलनाशायेति । मलनाशः कर्मकाण्डेन । चित्तविक्षेपशमनमुपासनाकाण्डेन ज्ञानकाण्डेन चाविद्याऽऽवरणनाशः । वेदाधिकारित्वं प्रदर्श्यते—त्रिवर्णिन इति । शूद्रस्य न वेदाधिकारः । स्मृतिपुराणादीनां त्वन्येषां सकाशात्स श्रवणं कुर्यान्न तु स्वयं पठेत् ॥

इति वेदप्रयोजनाधिकारानिरूपणं नाम विंशं प्रकरणम् ॥

कर्मनाशः कथं भवेदित्याह—न स्वयमिति । न त्याज्यं स्वयमेव कर्म । तत्तु ज्ञानप्राप्तेरनन्तरं स्वयमेव नाशं प्राप्नुयात् । वर्णधर्ममतधर्मसामान्यधर्मेति धर्मस्य त्रैविध्यं दर्शयित्वा तत्स्थानं दर्शयति—श्रुतिस्मृतीति । कर्मणां कालं दर्शयति—नित्ये नित्यमिति । नित्यमेव नित्यकर्म कर्तव्यम् । निमित्तेषु नैमित्तिकं कर्तव्यम् । श्रवणादिकर्म तु सदैव ॥

इति कर्मनाशनिरूपणमेकविंशं प्रकरणम् ॥

चतुर्थोध्यायः समाप्तः ।

## अथ पञ्चमोऽध्यायः ।

योगी ज्ञानाधिकारी ॥ १ ॥ निर्मलनिश्चलान्तःकरणोपेतो योगी ॥२॥ केवलावरणोपेतः ॥३॥ स साधनश्रवणाधिकारी ॥४॥ बाह्यं सप्त ॥५॥ साक्षान्महावाक्यं मुख्यम् ॥६॥ अव्यवहितपाराशक्त्यमपरोक्षम् ॥ ७ ॥ मूलाविद्यानाशद्वारा ब्रह्मप्राप्तिर्मुक्तिः ॥ ८ ॥ शोकरहितसुखरूपी भूमा ॥ ९ ॥ संस्काररहितः पामरः ॥ १० ॥ काम्यकर्मपरो विषयी ॥ ११ ॥ जिज्ञासुः संस्कृतः ॥ १२ ॥ मुक्तो ज्ञानी ॥ १३ ॥ ज्ञानेनाज्ञाननाशः ॥ १४ ॥ अविद्याजन्यं भेदज्ञानम् ॥ १५ ॥ अनुकूलप्रतिकूलजौ रागद्वेषौ ॥ १६ ॥ तज्जौ धर्माधर्मौ ॥ १७ ॥ तज्जो देहः ॥ १८ ॥ ज्ञानेन दुःखनिवृत्त्या-

---

योगिनो मुक्तिप्राप्तिमाह— **योगी ज्ञानाधिकारीति** । नित्यनैमित्तिकादिकर्मभिरन्त.करणशुद्धिः स्यात् । मुक्तिस्तु योगेनैवेति भाव. । योगिन व्याचष्टे— **निर्मलेति** । अन्त.करणनैर्मल्य निश्चलत्व च योगिन आवश्यकतया प्रतिपाद्येते। योगबलेन केवलमावरणनाशः कर्तव्यतयाऽऽपतति । स चावरणनाशः साधनश्रवणादिभिः समुत्पद्यते । **बाह्य सप्तेति** । सप्तशब्देन विशेषित किरूप बाह्यं सूत्रकारेणाभिप्रेयते इति न स्फुटम् । योगस्य यमनियमादिष्वष्टसु अङ्गेषु समाधिवर्जितानि यमादीनि सप्ताङ्गानि कदाचिदभिप्रेतानीति भाति । **साक्षान्महावाक्यमिति** । 'तत्त्वमसि' (छा. ६।८।७) 'अयमात्मा ब्रह्म' (बृ २।५।१९) 'सर्वं खल्विदं ब्रह्म' (छा ३।१४।१) इत्यादीनि सर्वविश्रुतान्येव महावाक्यानि । महावाक्यस्य माहात्म्य वर्णयति— **अव्यवहितेति** । महावाक्यज्ञानेन परस्याः शक्तेः स्वरूपमपरोक्ष भवतीत्यर्थः । शक्तिस्वरूपप्रकटनान्मूलाविद्यानाशो भवति ब्रह्मप्राप्तिश्च भवति । मुक्ते. पूर्वां पदवीं वर्णयति— **शोकरहितेति** । भूमावस्थाया शोकरहितसुखप्राप्तिर्भवति । जीवन्मुक्तो नरो भवतीत्यर्थः । सांसारिकनरस्यावस्थाचतुष्टय कथयति— **संस्काररहितेति** । अत्यन्तनिकृष्ट, पामर. । तत. श्रेयान् विषयी । ततोपि श्रेयान्संस्कृत. । तुरीयो मुक्त एव । ज्ञानप्राप्तेः पूर्वं वर्तमाना अवस्था. क्रमेण कथयति— **भेदज्ञानमिति** ।

नन्दप्राप्तिः ॥ १९ ॥ देहत्रयातीतमात्मानं शक्तिरूपतया ज्ञात्वा मुक्तः ॥ २० ॥

इति श्रीशाक्तदर्शने पञ्चमाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

गुणशान्तिरूपिणी ब्रह्मशक्तिर्निराभासा ॥ १ ॥ ईश्वरी साभासा ॥ २ ॥ साभासा ज्ञानरूपिणी जीवः ॥ ३ ॥ मूलादिर्जडा माया ॥ ४ ॥ तच्चिद्योगः कालः ॥ ५ ॥ जीवेशभेदकं कर्म ॥ ६ ॥ उत्पत्तिरहिता अनादयः ॥ ७ ॥ सत्यं ब्रह्म ॥ ८ ॥ अधिष्ठानविशेषाज्ञानं जगद्धेतुः ॥ ९ ॥ कारणाध्यासः ॥ १० ॥ स्वाध्यासप्रपञ्चाध्यासहेतुर्मायैव ॥ ११ ॥ व्यापकचेतनं सामान्यम् ॥ १२ ॥ वृत्तिस्थं विशेषम् ॥ १३ ॥ नाज्ञानविरोधि सामान्यम् ॥ १४ ॥ वृत्तिस्थमेव ॥ १५ ॥ काष्ठवह्निः सामान्यः ॥ १६ ॥ मन्थना-

---

भेदज्ञानमविद्याजन्यं प्रथमतः । भेदज्ञानाद्रागद्वेषौ । रागद्वेषप्रभवौ धर्माधर्मौ । धर्माधर्मजन्यो देहः । ततो ज्ञानम् । ज्ञानेन दुःखनिवृत्तिः । ततः शक्तिज्ञानान्मुक्तिः ॥

इति योगिसमवाप्यज्ञानविवरणं नाम द्वाविंशं प्रकरणम् ॥

अधुना जीवजगत्स्वरूपमाचष्टे— **गुणशान्तिरूपिणीति** । गुणसाम्ययुता परा शक्तिर्निराभासा । यदा सा गुणवैषम्यात्साभासा भवति तदा ईश्वरी शक्तिरिति सा निगद्यते । जीवं व्याचष्टे—**साभासा ज्ञानरूपिणीति** । ज्ञानरूपा साभासा शक्तिरेव *जीवः । ज्ञानरहिता साभासा शक्तिर्जडा मायेति कथ्यते । मायाचितोर्योग एव* कालः । उत्पत्तिरहिता अनादयो जीवाः । कर्मबन्ध एव ईश्वरस्वरूपात्तस्य भेदकः । अध्यासं निरूपयति—**अधिष्ठानविशेषाज्ञानमिति** । ब्रह्मरूपं यत्सर्वस्याधिष्ठानं तस्याज्ञानमेव अध्यासमूलम् । जीवजगदादि सर्वं ब्रह्मण्यध्यस्तमेव वर्तते तदेव च भ्रान्तिरूपेऽस्मिन्संसारे स्फुरति । तथा चोक्तम्— अध्यस्तमेव हि परिस्फुरति भ्रमेषु । मूलाज्ञानमूलकोऽयमध्यासः कारणाध्यासो जगद्धेतुः । मायैव स्वाध्यासं जनयति प्रपञ्चाध्यासं च । **वृत्तिस्थमिति** । वृत्तिर्नामान्तःकरणवृत्तिः ॥

इति अध्यासविवेचनं नाम त्रयोविंशं प्रकरणम् ॥

ग्निर्विशेषः ॥ १७ ॥ सद्रूपात्मनि वन्धाध्यासः ॥ १८ ॥ जगदध्यासेन ॥ १९ ॥ ज्ञानेनाध्यासनाशः ॥ २० ॥

इति श्रीशाक्तदर्शने पञ्चमाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः

तद्भावगो गुरुः ॥१॥ नवरसात्मिकां भक्तिं तस्मिन् ॥२॥ मनोवाक्कायधनार्पणैश्च ॥३॥ वटुर्देहार्पणेन ॥४॥ गृही धनेन ॥५॥ वाचा वनी ॥ ६ ॥ यतिर्मनसा ॥ ७ ॥ धनार्पणं याज्ञवल्क्यः ॥ ८ ॥ वाग्रामः ॥९॥ शुको देहः ॥१०॥ मनः कृष्णः ॥११॥ हरिहरब्रह्मसूर्यशक्त्यात्मको गुरुः ॥ १२ ॥ ससाधनः शिष्यः ॥ १३ ॥ गुरुकटाक्षं विना न किंचिदुभयत्र ॥ १४ ॥ शिवे रुष्टे गुरुस्त्राता ॥१५॥ न कश्चन गुरौ ॥१६॥ गुरुतोषणं परमं साधनम् ॥१७॥

इति श्रीशाक्तदर्शने पञ्चमाध्यायस्य तृतीयः पादः ॥

---

अधुना गुरुं व्याचष्टे तन्माहात्म्यं च वर्णयति—**तद्भावगो गुरुरिति**। स एव गुरुर्यः शिष्यस्य मनोवृत्तिं जानाति। **नवरसात्मिकां भक्तिमिति**। स्मरणं नामसंकीर्तनं नमस्कारः पादसेवा सततपूजनम् आत्मसमर्पणं श्रवणं सेवा सख्यम् इति भक्तेर्नवाङ्गानि पुराणग्रन्थेभ्योवगन्तव्यानि। सर्वस्वार्पणं तु भक्तेः स्वरूपम्। चतुर्भिः प्रकारैस्तदर्पणं भवतीति प्रतिपादयति—**मनोवाक्कायेति**। वटुर्देहार्पणेनेत्यादिसूत्रचतुष्टयेन चतुर्षु आश्रमेषु परस्या भक्तेः स्वरूपं तथा धनार्पणमित्यादिसूत्रचतुष्टयेन च दृष्टान्तान् दर्शयति। वटुर्नाम ब्रह्मचारी देहार्पणेनापि भक्तिं कुर्यात्। यथा शुको ब्रह्मचारी। शुकेन कृतं देहार्पणं पुराणतोऽनुसंधेयम्। गृहस्थो धनेन यथा याज्ञवल्क्यः। अत्रापि पुराणतः कथाऽनुसंधेया। वनी वानप्रस्थः वाचा। अत्र वाग्राम इति दृष्टान्तो न समीचीनतया युज्यते। रामेण वागर्पणं दशरथाय कृतं वनं च गतः परंतु तदा न स वानप्रस्थाश्रमी। यतिर्मनसोर्पणमपि कुर्यात्। अत्रापि मनः कृष्णः इति दृष्टान्तो नानुसंधीयते। कदाचिद्यतिः कृष्णो नाम कृष्णद्वैपायनो व्यासः स्यात्। गुरोर्योग्यतां दर्शयति—**हरिहरेति**। हरिहरादिपञ्चदेवसमानो गुरुरिति भावः। **न कश्चन गुराविति**। अत्र रुष्टे त्रातेति पदे अध्याहार्ये। गुरौ रुष्टे न कोपि त्रातेति भावः॥

इति गुरुमाहात्म्यप्रकरणं नाम चतुर्विंशं प्रकरणम्॥

अथ चतुर्थः पादः

जन्ममरणादिदुःखरूपसंसृतिनाशो मोक्षः ॥ १ ॥ जीवेशाभेदबोधकं ज्ञानम् ॥ २ ॥ तत्त्वमस्यादिवाक्यजम् ॥ ३ ॥ जन्मादिरहितश्चेतनः ॥ ४ ॥ आत्मनोऽज्ञो विषयेच्छुः ॥ ५ ॥ न भात्यात्मप्रतिबिम्बस्तद्बुद्धत्वात् ॥ ६ ॥ न विषयोत्थं स्थिरतरम् ॥ ७ ॥ नानन्दं परा(दा)र्थे ॥ ८ ॥ स्वरूपानन्दमेव विषयिष्वपि ॥ ९ ॥ आनन्दमात्मा ॥ १० ॥ सदाज्ञानात्मविमुखः ॥ ११ ॥ विषयेच्छाबाहिर्मुखे ज्ञानिनः ॥ १२ ॥ समाधिर्ज्ञानिनो विषयेपि ॥ १३ ॥ अज्ञानिनो विषयभ्रान्तिः ॥ १४ ॥ जगन्मिथ्या ॥ १५ ॥ न जगत् पारमार्थे ॥ १६ ॥ भात्यज्ञानेन रज्जुसर्पवत् ॥ १७ ॥

इति श्रीशाक्तदर्शने पञ्चमाध्यायस्य चतुर्थः पादः ॥

पञ्चमाध्यायः समाप्तः ॥

---

अथ जगत्स्वरूपं प्रतिपाद्य ज्ञानलभ्यं मोक्षमाह— जन्ममरणेति। संसृतिः संसारः। जीवेशयोरैक्यज्ञानमेव ज्ञानं तच्च तत्त्वमस्यादिवाक्यार्थजन्यम्। तथा च स्मृतिः। विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति (विष्णुपुराण ६।७।९४) इति। तत्त्वमस्यादिवाक्यजमिति। तत्त्वमसीत्यस्य वाक्यार्थस्तु अग्रे एकादशाध्यायस्य प्रथमे पादे वक्ष्यते। आत्मनोऽज्ञो विषयेच्छुः। यस्य नात्मज्ञानं स विषयेच्छापरः। अत्र मूललिखिते आत्मानज्ञो विषयेच्छुरिति लभ्यते। नूनं स लेखकप्रमादः। नानन्दं परार्थे। कदाचित् पदार्थे इति पाठः स्यात्। स्वरूपानन्दमेवेति। अत्र विषयेष्वपि इति पाठः कल्प्येत। विषयेषु अपि स्वरूपज्ञानेन आनन्दः स्यादेवेति भावः। तथा चानन्तरसूत्रे समाधिर्ज्ञानिनो विषयेऽपीत्युच्यते। आनन्दशब्दस्यात्र नपुंसकलिङ्गे प्रयोगः कृतः सूत्रकृता। विषयेच्छेति। अत्रापि बाहिर्मुखे इत्यस्यार्थो न युज्यते। 'बाहिर्मुखाः ज्ञानिनः' इति पाठः स्यात्। न जगत्पारमार्थे इति। पारमार्थे इत्यस्य स्थाने पारमार्थम् इति स्यात्। पारमार्थे इत्यस्य पारमार्थे विचारे कृते इति वार्थः समुपलभ्येत ॥

इति आत्मजीवजगन्निरूपणं नाम पञ्चविंशं प्रकरणम् ॥

## अथ षष्ठोऽध्यायः ।

जीवः कर्मभोक्ता ॥ १ ॥ तत्प्रकाशकः साक्षी ॥ २ ॥ ईश्वरः फलदः ॥ ३ ॥ जडभूतं कर्म ॥ ४ ॥ न तत् फलदम् ॥ ५ ॥ न कर्मेश्वरः ॥ ६ ॥ सव्योमप्रतिबिम्बघटाकाशो जलाकाशः ॥ ७ ॥ ब्रह्माण्डव्यापको महाकाशः ॥ ८ ॥ सव्योमप्रतिबिम्बसहितो मेघाकाशः ॥ ९ ॥ कूटस्थो घटाकाशवत् ॥ १० ॥ जलाकाशवज्जीवः ॥ ११ ॥ मेघाकाशवदीश्वरः ॥ १२ ॥ ईश्वरो भुवनेश्वरी ॥ १३ ॥ नेश्वरः प्रकृतेः प्रेरकः ॥ १४ ॥ नियामकः ॥ १५ ॥ तदिच्छागुणरूपाणि न नित्यानि ॥ १६ ॥ न ईशो हिरण्यगर्भः ॥ १७ ॥ न विराट् ॥ १८ ॥

**इति श्रीशाक्तदर्शने षष्ठाध्यायस्य प्रथमः पादः ॥**

---

अधुना जीवेश्वरस्वरूपं प्रतिपादयति तयोर्भेदं च दृष्टान्तेन दर्शयति— **जीवः कर्मभोक्तेति** । कर्मभोक्ता जीवो जलाकाशवत् । जलाकाशश्च व्योमप्रतिबिम्बसहितो जलपूर्णो घटाकाशः । ईश्वरस्तु जीवकृतस्य कर्मणः साक्षिरूपत्वेन वर्तते कर्मणश्च फलं ददाति । कर्म जडं न कदापि स्वयं फलं दातुं समर्थम् । कर्म एवेश्वर इति पूर्वमीमांसामतं न ग्राह्यम् । मेघाकाशसदृश ईश्वरो न प्रतिबिम्बभूतः किंतु मेघरूपोपाधियुक्ताकाशवन्मायोपाधियुतः । **कूटस्थो घटाकाशवत्** । अत्र ब्रह्माण्डव्यापको महाकाश इति पूर्वसूत्रानुरोधेन महाकाशवदिति पाठः स्यात् ॥

इति जीवस्य कर्मभोक्तृत्वं नाम षड्विंशं प्रकरणम् ॥

अधुना ईश्वरस्वरूपं निरूप्य भुवनेश्वर्या ईश्वरत्वं प्रतिपादयति— **ईश्वरो भुवनेश्वरीत्यादिना** । इयं भुवनेश्वरी त्रिगुणात्मिकां प्रकृतिं न प्रेरयति । सा तु तामन्तर्यामितया स्थित्वा नियमयति । गुणवैषम्याज्जायमाना कार्यसृष्टिः भुवनेश्वर्या इच्छामनुसृत्य उत्पन्ना । अत एव सा अनित्या । **न ईश** इति । ईश्वरो नाम भुवनेश्वरी हिरण्यगर्भनाम्नो ब्रह्मणः सकाशाद्भिन्ना विराड्रूपादपि भिन्ना ॥

इति भुवनेश्वर्या ईश्वरत्वं नाम सप्तविंशं प्रकरणम् ॥

अथ द्वितीयः पादः

ईशोन्तर्यामी ॥ १ ॥ मुक्तः सदा ॥ २ ॥ नावरणः स्वरूपे ॥ ३ ॥ न भाति जन्मादीनि ॥ ४ ॥ सत्याभासमयत्वात्सर्वज्ञः ॥ ५ ॥ जीवेशाधिष्ठानं निराभासशक्तिः ॥ ६ ॥ आभासे बन्धमोक्षौ ॥ ७ ॥ सावरणाभासो बद्धः ॥ ८ ॥ निर्लेपा निराभासा ॥ ९ ॥ जगज्जन्मादिकर्त्री साभासा ॥ १० ॥ निरपेक्षिकव्यापकचेतनं निराभासा ॥ ११ ॥ सापेक्षिका माया ॥ १२ ॥ उभयात्मिका भुवननायिका ॥ १३ ॥ मिथ्याभासः पुण्यपापकर्ता ॥ १४ ॥ कूटस्थो मङ्गलः ॥ १५ ॥ प्रकाशकः ॥ १६ ॥ आभासो भोक्ता ॥ १७ ॥ चेतनांशो निराभासः ॥ १८ ॥

इति श्रीशाक्तदर्शने षष्ठाध्यायस्य द्वितीयः पादः ॥

अथ षष्ठे तृतीयः पादः

अवस्थाः सप्त ॥ १ ॥ न ब्रह्म ज्ञायत इति व्यवहारहेतुर-

---

अधुना ईश्वरनाम्न्या भुवनेश्वर्याः स्वरूप विशदयति—ईशोन्तर्यामीत्यादिना । सर्वस्य जीवजडात्मकवस्तुजातस्यान्तर्यामिस्वरूपेण वर्तमानः स ईश्वरो न किमपि मायाया आवरण बिभर्ति । सत्याभासस्वरूपेण वर्तमानत्वात्स मुक्तः सर्वज्ञो नित्यश्च । जीवानामीशस्य चाधिष्ठात्री निराभासा परा शक्तिरेव । मायाकृताभासयुक्तत्वाज्जीवस्य बन्धो ज्ञानाच्च तस्य मुक्ति. । वस्तुतो भुवनेश्वरी परा शक्तिः । निर्लेपा निराभासा । सा निरपेक्षिकव्यापकचैतन्यरूपा स्वरूपतो निराभासा । सापेक्षा यदा सा भवति तदा मायारूप धृत्वा जगज्जनयति । साभासनिराभासस्वरूपत्वात्सा उभयात्मिका भुवननायिकेति गीयते । मिथ्याभास इति सूत्रत्रयेण तथैव आभासो भोक्ता इत्यादिसूत्रद्वयेन जीवेशयोर्भेदः प्रदर्शितः ॥

इतीश्वरस्वरूपनिरूपण नामाष्टाविंश प्रकरणम् ॥

अवस्थाः सप्तेति । ब्रह्मज्ञानावाप्ते' सप्तावस्था दर्शयति । तत्र अस्माभि-

ज्ञानम् ॥ २ ॥ न भाति ब्रह्मावरणम् ॥ ३ ॥ कूटस्थे भासमानं जन्मादिर्भ्रान्तिः ॥ ४ ॥ परोक्षज्ञानमावरणदम् ॥ ५ ॥ अज्ञानान्तकमपरोक्षम् ॥ ६ ॥ अपरोक्षानुभूतिर्भ्रान्तिनाशः ॥ ७ ॥ सिद्धिर्हर्षः ॥ ८ ॥ मुख्याभेदः कूटस्थे ॥९॥ बाधाभेद आभासे ॥१०॥ अहंवृत्त्यामेककाले भासमानावाभासकूटस्थौ ॥ ११ ॥ साक्षिविषय आभासः ॥ १२ ॥ नाभासविषयः साक्षी ॥ १३ ॥

इति श्रीशाक्तदर्शने षष्ठाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः

प्रत्यक्षं प्रमाणम् ॥ १ ॥ कणादोनुमानं च ॥ २ ॥ कपिलः

---

ब्रह्म नैव ज्ञायते इति व्यवह्रियमाणा अज्ञानावस्था प्रथमा । अस्यामवस्थायां ब्रह्म येन समावृतं वर्तते तस्यावरणस्य नैव ज्ञानं वर्तते । इयं ब्रह्मावरणाभानं द्वितीया अवस्था । **कूटस्थे इति** । कूटस्थे परमे ब्रह्मणि नाम शक्तौ यज्जन्मादि भासते सा भ्रान्तिः । इयं तृतीया अवस्था । **परोक्षज्ञानमिति** । येन आवरणं दायते छिद्यते तत् आवरणदं परोक्षज्ञानम् । इयं तुरीया अवस्था । **अपरोक्षेति** । भ्रान्तिनाशः अपरोक्षानुभवः । इयं पञ्चमी अवस्था । हर्षरूपा सिद्धिः षष्ठी अवस्था । सिद्धेरनन्तरं कूटस्थज्ञानं सप्तमी अवस्था । अस्यां मुख्यायाः शक्तेरभेदः स्फुरति । इयं सप्तमी अवस्था साभासशक्तिज्ञानावस्थायाः सकाशाद्भिन्नेति प्रतिपाद्यते— **बाधाभेद आभासे इति** । आभासज्ञाने बाधाया नाम बाध्यमानायाः आभासशक्तेर्भानम् । निराभासशक्तेर्ज्ञानं तु कूटस्थज्ञानमेव । **साक्षिविषय इति** । आभासज्ञाने साक्षी विषयी । तथा च साक्षिणः आभासो नाम ज्ञानं भवति । परंतु *आभासज्ञानं न केनापि गृह्यते । आभासः शक्तेः स्वरूपमेव न तज्ज्ञानार्थं* साक्षिण आवश्यकत्वमिति नान्योन्याश्रयदोषः ॥

इति ज्ञानस्यावस्थासप्तकं नामैकोनत्रिंशं प्रकरणम् ।

अथ ज्ञानप्राप्तेः प्रमाणानि निरूप्यन्ते—**प्रत्यक्षमिति** । इन्द्रियार्थसंनिकर्षाज्जायमानं प्रत्यक्षं तु सर्वशास्त्रकाराणां संमततया प्रथमं दीयते । क्रमेण च मतान्तरेण प्रमाणसंख्यावृद्धिं दर्शयति—**कणादोऽनुमानं चेति** । काणादास्तु

शब्दम् ॥ ३ ॥ उपमानं गौतमः ॥४॥ अर्थापत्तिं जैमिनिः ॥५॥ अनुपलब्धिश्च(लब्धिं च) ॥६॥ प्रमाज्ञानकरणभूतं प्रमाणम् ॥७॥ स्मृतिभिन्नमबाध्यम् ॥ ८ ॥ विषयीकरणं ज्ञानं प्रमा ॥ ९ ॥ न स्मृतिज्ञानं प्रमा ॥ १० ॥ प्रमाव्यवहारकारणवृत्तेरपि प्रमा नाम ॥ ११ ॥ तद्वृत्तेः कारणमिन्द्रियाणि ॥ १२ ॥ अन्तःकरणावच्छिन्नं प्रमाता ॥ १३ ॥ वृत्तिज्ञानावच्छिन्नं प्रमाणम् ॥ १४ ॥ विषयगतवृत्त्यावच्छिन्नं प्रमेयम् ॥ १५ ॥ वृत्तेः सत्त्वाकारावच्छिन्नं

---

लिङ्गपरामर्शरूपमनुमानं द्वितीयं प्रमाणं ददाति । कपिल इति । कपिलो नाम सांख्यशास्त्रप्रवक्ता शब्दं तृतीयं प्रमाणं ब्रूते । गौतमो न्यायशास्त्रप्रवर्तकश्चतुर्थमुपमानं प्रवक्ति । जैमिनिराचार्यः पूर्वमीमांसाशास्त्रप्रवर्तकोऽर्थापत्तिमनुपलब्धिं द्वे अधिके प्रमाणे निरूपयति। एवं षट् प्रमाणानि तत्र तत्र शास्त्रग्रन्थेषु समुपलभ्यन्ते। तत्र प्रथमतः प्रमाणशब्दं व्याचष्टे—प्रमाज्ञानेति । प्रमा नाम स्मृतिभिन्नं यथार्थज्ञानं तस्य साधनं प्रमाणम् । अन्यथा प्रमा व्याख्यायते—विषयीकरणमिति । यत्र पदार्थः ज्ञानस्य विषयीभवति तज्ज्ञानं प्रमेति । इन्द्रियार्थसंनिकर्षं विनापि साक्षात्काररूपं यज्ज्ञानं भवति तस्य बाधराहित्ये सति प्रमात्वमनया व्याख्यया व्यज्यते । प्रमेत्यभिधानस्य हेतुं दर्शयति—प्रमाव्यवहारेति । अत्र प्रमाव्यवहारान्तःकरणवृत्तेरपीति पाठः कदाचित्स्यात् । यथास्थितपाठेपि प्रमेतिव्यवहारस्य यत्कारणं नामान्तःकरणं तस्य या वृत्तिः सा प्रमेत्यर्थः । प्रमां स्फुटीकरोति—अन्तःकरणावच्छिन्नमिति चतुःसूत्र्या । सर्वत्रावच्छिन्नशब्देनाध्याहृतं चैतन्यं विशेष्यते । तथा च अन्तःकरणावच्छिन्न चैतन्यमेव प्रमाता, अन्तःकरणस्य या वृत्तिः ज्ञानरूपा तयावच्छिन्न चैतन्यं प्रमाणम्, विषयगता इन्द्रियद्वारा समासादिता या अन्तःकरणवृत्तिः तयावच्छिन्नं चैतन्यं प्रमेयम्, तथा चान्तःकरणवृत्तेर्यः सत्त्वगुणस्तदाकारावच्छिन्नं चैतन्यं प्रमितिः । इयं प्रक्रिया

प्रमितिः ॥ १६ ॥ कार्यसंबन्धव्यावर्तकं विशेषणम् ॥ १७ ॥ प्रमातृविशेषणमन्तःकरणम् ॥ १८ ॥ स्वरूपप्रवेशं विना व्यावर्तकं तदुपाधिः ॥ १९ ॥ अन्तःकरणं साक्ष्युपाधिः ॥ २० ॥ विशेषणं प्रमातुः ॥ २१ ॥ उपाधिनोपहितः ॥ २२ ॥ विशिष्टो विशेषणेन ॥ २३ ॥ साभासान्तःकरणविशिष्टो जीवः ॥ २४ ॥ उपहितः साक्षी ॥ २५ ॥

इति श्रीशाक्तदर्शने षष्ठाध्यायस्य चतुर्थः पादः ॥

षष्ठाध्यायः समाप्तः ॥

---

शाङ्करवेदान्तिपरिकल्पितज्ञानप्रक्रियया बह्वंशेन समाना । तथा च सिद्धान्तबिन्दौ— 'तस्य चाभिव्यक्तस्य चैतन्यस्यैकत्वेपि अभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति । कर्तृभागावच्छिन्नचिदंशः प्रमाता, क्रियाभागावच्छिन्नचिदंशः प्रमाणम् । विषयगताभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमितिः । प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातम्' इति ॥

इति प्रमाणभेदनिरूपणं नाम त्रिंशं प्रकरणम् ॥

अधुना विशेषणस्वरूपमुपाधिस्वरूपं च निरूप्यते तयोश्च भेदः स्पष्टीक्रियते—कार्यसंबन्धेति । व्यावर्तकत्वमुभयोरपि विशेषणोपाध्योः समानम्, स्वरूपप्रवेश एव भेदमूलम् । तथा हि 'घटाकाशम्' इत्यत्र घटः आकाशस्वरूपमप्रविश्य तन्नियमयति । घटास्थित आकाश इति यावत् । नीलो घट इत्यत्र घटस्वरूपं प्रविश्यैव नीलिमसहितघट इति विशेषणं नीलशब्दो नीलत्वभिन्ननीलसदृशसंबन्धं व्यावर्तयति । तथा च जीवस्य साभासान्तःकरणं विशेषणम् । साक्षिणस्तु साभासान्तःकरणमुपाधिः ॥

इति जीवनिरूपण नाम एकत्रिंश प्रकरणम् ॥

## अथ सप्तमोऽध्यायः

प्रत्यक्षमिन्द्रियजन्यम् ॥ १ ॥ न ज्ञानं प्रत्यक्षम् ॥ २ ॥ मायाकल्पितत्वाद्राज्यादीनां मूर्तयो मिथ्या ॥३॥ न मूर्तिर्ब्रह्म ॥४॥ तन्निष्ठचेतनं ब्रह्म ॥ ५ ॥ स्वेच्छाकल्पिता मूर्तयः ॥ ६ ॥ न क्रमसृष्टिजातदेहाः ॥ ७ ॥ न चैवं रामकृष्णाद्याः ॥ ८ ॥ भूतपरिणाममयाः ॥९॥ ईश्वराविर्भावः ॥१०॥ न सिद्धिर्ज्ञानं विना ॥११॥ विवेचनान्मुञ्जेषीकवत् ॥ १२ ॥ सच्चिदानन्दाद्वयान्यात्मविशेषणानि ॥ १३ ॥ असज्जडदुःखद्वयानि देहादीनाम् ॥ १४ ॥ असज्ज-

---

प्रत्यक्षमिन्द्रियजन्यमिति । अस्मिन्प्रकरणे प्रतिपादनविषयः प्रतिपादनप्रकारो वा न स्पष्टतया प्रतिभाति । इन्द्रियजन्यत्वात्प्रत्यक्षं न सर्वदा सर्वथैव सत्यम् । राजादिमूर्तिषु न राज्ञि वर्तमाना धर्मा दृश्यन्ते । रामकृष्णादीनां देवानां मूर्तिषु तु तत्रेश्वराविर्भावसत्त्वात् प्रभावज्ञानं सत्यम् । राजादिमूर्तयः पृथिव्यादिभूतपरिणामरूपाः । तत्र राजादीनां न प्रत्यक्षम् । रामकृष्णादिमूर्तिषु तु यतः शक्त्या तत्र स्वयमेव विशिष्टा रामकृष्णादिमूर्तयो विशिष्टावयवैर्धनुश्चक्रादिसहिताः कल्पिता अतस्तेषां सत्यत्वम् ॥

इति मूर्तिप्रत्यक्षत्वनिरूपणं नाम द्वात्रिंशं प्रकरणम् ॥

अथ पञ्चकोशात्मकस्य देहस्य आत्मनश्च परस्पराध्यासो वर्ण्यते—न सिद्धिर्ज्ञानं विनेत्यादिना । प्रथमतः ज्ञानादेव सिद्धिः नोपासनतः न कर्मणा न कर्मणः केवलं त्यागेन वेति प्रतिपादयति । सिद्धेश्च स्वरूपं मुञ्जेषीकदृष्टान्तेन विशदयति—मुञ्जेषीकवदिति । तथा च कठोपनिषदि—अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतम् ( काठकोपनिषत् ६।१७ )। सच्चिदानन्दाद्वयानीति । अयं पाठ उत्तरसूत्रे च तादृशः पाठ उभावप्यपपाठौ दृश्येते । सच्चिदानन्दाद्यान्यात्मविशेषणानि असज्जडदुःखाद्यानि देहादीनामिति भवितव्यम् । अथवा अद्वयद्वयशब्दौ अद्वैतद्वैतयुक्तेत्यर्थप्रतिपादनपरौ ग्राह्यौ । सच्चिदानन्दरूपस्यात्मन उपरि असज्जडदुःखस्वरूपमावरणम् । तथा च पञ्चकोशात्म-

डावरणं देहे सच्चिदानन्दात्मनः ॥१५॥ पञ्चकोशात्मनः परस्परा-ध्यासः ॥ १६ ॥ अतः कोशविवेचनम् ॥ १७ ॥

इति श्रीशाक्तदर्शने सप्तमाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

न भाति स्वप्ने स्थूलः ॥ १ ॥ भात्यात्मा ॥ २ ॥ न सूक्ष्मं सुषुप्त्याम् ॥ ३ ॥ स्वयं भाति सुखरूपात्मा ॥ ४ ॥ सुषुप्त्यां सुखज्ञानम् ॥ ५ ॥ न तद्विपर्योत्थम् ॥ ६ ॥ न निर्विकल्पसमाध्यामज्ञानावरणम् ॥७॥ न भाति कारणो देहः ॥८॥ देहत्रयातीत आत्मा ॥ ९ ॥ अन्नमयः स्थूलदेहः ॥ १० ॥ कोशत्रययुतः सूक्ष्मः ॥ ११ ॥ आनन्दमयं कारणम् ॥ १२ ॥ देहत्रयविवेचनमेव

कस्य देहस्योपरि सच्चिदानन्दात्मन आवरणम्। आवरणशब्देनात्राध्यास उच्यते। अस्याध्यासस्य विस्तरः सिद्धान्तविन्दौ द्रष्टव्यः ॥

इति देहात्मनोः परस्पराध्यासस्य निरूपण नाम त्रयस्त्रिंश प्रकरणम् ॥

अथ पञ्चकोशविवेचनमारभ्यते—**न भाति स्वप्ने स्थूल इति**। अन्नप्राणमनोविज्ञानानन्दनामानः पञ्च कोशाः सर्वसारोपनिषदि वर्णिताः। तथा तैत्तिरीयोपनिषदि भृगुवल्ल्यां कोशशब्द विना प्रदर्शिताः। तेषां स्वरूप ततोवगन्तव्यम्। न भाति स्वप्ने स्थूल इति हेतुना स्थूलान्नमयकोशात्सूक्ष्म. प्राणमयकोशोनुमितः। भात्यात्मेति सूत्रस्य 'तथापि तत्र आत्मा भाति यद्यपि तत्र स्थूलदेहस्य नैव भानं वर्तते' इत्यर्थः। अथवा 'न भाति स्वप्ने स्थूलो भात्यात्मा' इति एकमेव सूत्र कदाचित्स्यात्। **न सूक्ष्मं सुषुप्त्यामिति**। सूक्ष्मशब्देन सूक्ष्मशरीरमत्र परामृश्यते। सुषुप्तौ सुखस्थान कारणदेहो वर्तते। निर्विकल्पकसमाधौ तु अज्ञानावरणाभावात्कारणदेहस्यापि न भानम्। **स्वयं भाति सुखरूप आत्मेति**। तथा ह्यनुभवः 'सुखमहमस्वाप्सम्, न किंचिदवेदिषम्' इति। **न निर्विकल्पकेति**। निर्विकल्पकसमाधौ अज्ञानावरणाभावात् कारणदेहस्यापि तत्र न भानम्। अधुना स्थूल-सूक्ष्म-कारणेति त्रिविधदेहेन सह पञ्चकोशस्य सबन्ध व्याचष्टे—**अन्नमय इति** ॥

इति पञ्चकोशविवेचन नाम चतुस्त्रिंश प्रकरणम् ॥

पञ्चकोशानाम् ॥ १३ ॥ अन्यः कोशेभ्य आत्मा ॥ १४ ॥ समष्टिभ्यः परमात्मा ॥ १५ ॥ ऐक्यज्ञानसिद्ध्यै विचार्यो महावाक्यप्रबन्धः ॥ १६ ॥ आत्मातिरिक्तमिदं मिथ्या ॥ १७ ॥ नाधिष्ठानं पृथक्कुर्यान्मिथ्या ॥ १८ ॥ ज्ञानात्पूर्वमपि आत्मा ब्रह्म ॥ १९ ॥ कालत्रयेष्वपि आत्मनि न देहतादात्म्यसंबन्धः ॥२०॥ सदा मुक्तः ॥२१॥ न भेदो ब्रह्मात्मनोः ॥२२॥ न जगज्ज्ञानिनः ॥ २३ ॥ नेश्वरश्च ॥ २४ ॥ न साक्ष्यम् ॥ २५ ॥ साक्ष्यपि ॥ २६ ॥ न बन्धमोक्षौ ॥ २७ ॥

इति श्रीशाक्तदर्शने सप्तमाध्यायस्य द्वितीयः पादः ॥

अथ सप्तमे तृतीयः पादः

लयश्चिन्तनं वा ॥१॥ पञ्चीकृतरूपमिदं ब्रह्माण्डम् ॥२॥

---

अधुना कोशेभ्य आत्मनोऽन्यत्वं प्रतिपादयति—**अन्यः कोशेभ्य इति**। **समष्टिभ्यः परमात्मेति**। समष्टिशब्देनात्र पञ्चकोशसमष्टिः प्रतिपाद्यते। अथवा समष्टिशब्देन सर्वः स्थूलः प्रपञ्चोऽभिहितः स्यात्। द्वितीय एवार्थोऽत्र साधीयान्। **ऐक्यज्ञानेति**। महावाक्येभ्यस्तत्त्वमस्यादिभ्य एवैक्यज्ञानं निष्पद्यते न भक्तेरुपासनाद्ध्यानादपि वा। **आत्मातिरिक्तमिति**। आत्मव्यतिरिक्तं सर्वं मिथ्येति शांकरवेदान्तसिद्धान्तोऽत्र प्रतिपादितः। **नाधिष्ठानमिति**। यथा रज्जौ भासमानः सर्पः रज्जुसकाशान्न पृथक्तया वर्तते तथा प्रपञ्चकारणभूता माया स्वाधिष्ठानादात्मनः पृथक्तया नैव दृश्यते। आत्मस्वरूपं विशदीकरोति—**ज्ञानात्पूर्वमपीति**। आत्मा सदैव मुक्तः। न कदापि तस्य देहेन सह तादात्म्यम्। ब्रह्मात्मनोर्न भेदः। आत्मज्ञानिनो न जगद्भानम्, नेश्वरभानं, न वा साक्षित्वभानं स्वतः साक्षिणि सत्यपि। न तस्य बन्धमोक्षौ। तथा च श्रुतिः न स पुनरावर्तते इति॥

इति आत्मस्वरूपविवरणं नाम पञ्चत्रिंशं प्रकरणम्॥

अथ ब्रह्माण्डस्य जगत उत्पत्तिं निरूपयति—**लयश्चिन्तनं वा**॥ **पञ्चीकृतरूपमिदं ब्रह्माण्डमिति**। लयश्चिन्तनं वेति प्रथमं सूत्रं पूर्वपादेन्तिमं

महाभूतान्यपञ्चीकृतकार्याणि ॥ ३ ॥ ज्ञानेन्द्रियान्तःकरणानि सूक्ष्मभूतसत्त्वकार्याणि ॥ ४ ॥ प्राणकर्मेन्द्रियाणि राजसानि ॥ ५॥ जलकार्यं पृथ्वी ॥ ६॥ जलं वह्निकार्यम् ॥ ७॥ वायोर्वह्निः ॥ ८॥ प्रकृतेर्व्योम ॥९॥ मायावस्था प्रकृतिः ॥१०॥ प्रधानं माया ॥११॥ चेतनाश्रया शक्तिः ॥ १२ ॥ ब्रह्मसामर्थ्यरूपा तद्भिन्ना ॥ १३ ॥ साहमस्मीति भावयेत् ॥ १४ ॥

इति श्रीशाक्तदर्शने सप्तमाध्यायस्य तृतीयः पादः ॥

अथ सप्तमे चतुर्थः पादः

प्रमाणप्रमेयाधीनं ज्ञानम् ॥ १ ॥ नाधीनं पुरुषेच्छयोः ॥२॥

---

स्यादिति भाति। तत्रैव तस्यार्थो 'न बन्धमोक्षौ' इति सूत्रेण सह समुपपन्नो भवति। मुक्तस्य नैव बन्धो न वा मोक्षस्तथैव नैव तस्य परमात्मनि लयो न च तस्य चिन्तनमावश्यकं मुक्त्यर्थे। पञ्चीकृतमित्यादिसूत्रमस्मिन्पादे प्रथमं दृश्यते। ब्रह्माण्डं पञ्चीकरणस्यानन्तरं समुत्पन्नं वर्तते। उत्पत्तेरनन्तरं पञ्च महाभूतानि प्रत्येकमेकस्य महाभूतस्यार्धांश इतरेषां चतुर्णां प्रत्येकमष्टमांशः इति मिलितानि पञ्चीकृतानीत्युच्यन्ते। पञ्चीकरणात्पूर्वं तानि स्थूलानि महाभूतानीति व्यवह्रियन्ते। तत्पूर्वं तानि सूक्ष्मरूपाणि सूक्ष्माणीत्युच्यन्ते। पञ्च ज्ञानेन्द्रियाणि अन्तःकरणं च सूक्ष्मभूतानां राजसांशात्समुत्पद्यन्ते। पृथिव्यादीनामुत्पत्तिस्तूपनिषत्सु वर्णितेन प्रकारेणाकाशाद्वायुर्वायोर्वह्निर्वह्नेर्जलं जलात्पृथिवीति। आकाशोत्पत्तिस्तु नात्मनः सकाशात् किंतु मायावस्थायाः प्रकृतेः। उत्पत्तिकर्मणि माया प्रधानम्। ब्रह्मसामर्थ्यरूपा शक्तिस्तु वर्तत एव। ज्ञानेच्छुना साहमस्मीति भावना कार्या॥

इति ब्रह्माण्डोत्पत्तिनिरूपणं नाम षट्त्रिंशं प्रकरणम् ॥

अधुना शक्तिस्वरूपज्ञानं निरूपयति —**प्रमाणप्रमेयेति**। प्रमाणप्रमेयमवलम्ब्य ज्ञानं वर्तते न तत्पुरुषेच्छाधीनम्। ध्यानं तु पुरुषेच्छाहठाधीनम्। तद्

विधिपुरुपेच्छाहठाधीनं ध्यानम् ॥ ३ ॥ निरन्तरध्येयाकारचित्तवृत्तिर्ध्यानम् ॥ ४ ॥ अहंग्रहध्यानपरो ज्ञानकल्पः ॥ ५ ॥ ह्रीमित्येकाक्षरं शक्तिः ॥ ६ ॥ साहमिति ॥ ७ ॥ साक्षिरूपशक्तिचिन्तनं निर्गुणम् ॥ ८ ॥ ईश्वर्याः सगुणम् ॥ ९ ॥ पूर्वं सिद्धिदम् ॥१०॥ अपरं लोकदम् ॥११॥ वाचकमेकाक्षरम् ॥१२॥ वाच्या परा शक्तिः ॥१३॥ वाच्यवाचकभेदादेकाक्षरं शक्तिः ॥१३॥ शक्त्या मध्यस्थम् ॥ १४ ॥ शक्तिरधिष्ठानम् ॥ १६ ॥ नाभेदो ब्रह्मशक्त्योः ॥ १७ ॥ पादचतुष्टयान्वितं ब्रह्म ॥ १८ ॥ आत्मापि ॥ १९ ॥ विराड्ढिरण्यगर्भेशसाक्षिणो ब्रह्मणः ॥ २० ॥ विश्वतैजसप्राज्ञकूटस्था आत्मनः ॥२१॥ हकाररेफईकारानुस्वारा एकाक्षरस्य ॥ २२ ॥ अभेदभावनाद् भेदनाशः ॥ २३ ॥

इति श्रीशाक्तदर्शने सप्तमाध्यायस्य तुरीयः पादः ॥

सप्तमाध्यायश्च समाप्तः ॥

---

व्याचष्टे — निरन्तरेति । ध्यानाज्ज्ञानमाह — अहंग्रहेति । अहमित्यर्थस्य सततं चिन्तनमहंज्ञानं कल्पयति। अधुना सगुणनिर्गुणप्रकारकद्विविधशक्तिज्ञानस्य फलमाह — ह्रीमिति । ह्रीमित्येकाक्षरवाच्यायाः परस्याः शक्तेर्ज्ञानं निर्गुणं तस्मात्सिद्धिर्नाम मुक्तिः संपद्यते। ईश्वरी सा शक्तिरिति चिन्तनं सगुणं ज्ञानम्। तत्तु परं लोकं नयति । ह्रीमित्यस्याक्षरस्य शक्तेश्च वाच्यवाचकसंबन्धः। अतस्तयोर्भेदः। ह्रीमित्यक्षरवाच्यायाः शक्तेस्तदधिष्ठानस्य मध्यस्थविन्दोरनुस्वाररूपस्य ब्रह्मणो ज्ञानम्। ब्रह्मशक्त्योस्तु न भेदो नाभेदः। ब्रह्मात्मनोर्द्वयोस्तदभिन्नायाः शक्तेरपि पादचतुष्टयान्वितत्वमाह — पादचतुष्टयेति। ध्यानेनाभेदभावनया भेदनाशो भवति ॥

इति शक्तिस्वरूपनिरूपणं नाम सप्तत्रिंशं प्रकरणम् ॥

## अथाष्टमोऽध्यायः ।

समष्टिस्थूलप्रपञ्चसहितचेतनो विराट् ॥ १ ॥ व्यष्टिस्थूलाभिमानी विश्वः ॥ २ ॥ स्थूलोपाधित्वाद्विश्वो विराट् ॥ ३ ॥ सप्ताङ्ग एकोनविंशतिमुखस्थूलभुक् ॥ ४ ॥ हकारविराड्विश्वाभेदः ॥ ५ ॥ अक्षिपुरीषो विश्वः ॥ ६ ॥ सप्ताङ्ग एकोनविंशतिमुखप्रविविक्तभुक् तैजसः ॥ ७ ॥ व्यष्टिसूक्ष्मदेहाभिमानी तैजसः ॥ ८ ॥ विश्वाङ्गानीशसृष्टिः ॥ ९ ॥ मनोमयानि तैजसस्य ॥ १० ॥ सुखदुःखज्ञानं भोगः ॥११॥ सूक्ष्मस्तैजसस्य ॥१२॥ विश्वः स्थूलभोक्ता ॥१३॥ सूक्ष्मभोक्ता तैजसः ॥ १४ ॥ बहिःप्रज्ञो विश्वः ॥ १५ ॥ अन्तःप्रज्ञस्तैजसः ॥१६॥ समष्टिसूक्ष्मप्रपञ्चसहितचेतनो हिरण्यगर्भः॥१७॥ सूक्ष्मोपाधित्वात्तैजसो हिरण्यगर्भः ॥ १८ ॥ हिरण्यगर्भतैजसरेफाभेदः ॥ १९ ॥ प्राणवायौ ॥ २० ॥ कण्ठे वा ॥ २१ ॥

इति श्रीशाक्तदर्शने अष्टमाध्यायस्य प्रथमः पादः ॥

---

अधुना पादचतुष्टयमध्ये विश्वतैजसात्मानौ विवेचयति । विराड्विश्वहकारैः प्रतिपादितमीश्वरीस्वरूपं माण्डूक्यनृसिंहपूर्वतापिनीरामोत्तरतापिन्याद्युपनिषत्सु वैश्वानरात्मेति यत्कथ्यते तदेव । तथा च हिरण्यगर्भरेफैः प्रतिपादितमीश्वरीस्वरूपं माण्डूक्यादिषु तैजसात्मेति यत्कथितं तदेव । अनयोर्विश्वतैजसात्मनोः सप्ताङ्गानि एकोनविंशतिमुखानि चोपनिषद्भाष्येभ्य एवावगन्तव्यानि । अक्षिपुरीषो विश्व इति । पुरीष इत्यपपाठः पुरुष इति भवितव्यम् । विश्वतैजसयोर्भेदं विशदीकरोति व्यष्टिसूक्ष्मदेहाभिमानीति । प्राणवायौ कण्ठे चेति । सूत्रद्वयं तैजसस्य देहे वर्तमानं स्थानं निरूपयति । विश्वात्मनः स्थानमक्षिपुरुषो विश्व इति कथितमेव ॥

इति विश्वतैजसात्मनिरूपणं नामाष्टत्रिंशं प्रकरणम् ॥

अथाष्टमे द्वितीयः पादः

समष्टयज्ञानसहितचेतन ईश्वरः ॥ १ ॥ व्यष्टिकरणाभिमानी प्राज्ञः ॥ २ ॥ प्रज्ञानघनः ॥ ३ ॥ आनन्दभुक् ॥ ४ ॥ अविद्यावृत्त्यध्यात्मम् ॥ ५ ॥ अज्ञानवृत्तानन्दमाधिभूतम् ॥ ६ ॥ अधिदैवमीश्वरः ॥ ७ ॥ कारणोपाधित्वात् प्राज्ञ ईश्वरः ॥ ८ ॥ ईकारप्राज्ञेशाभेदः ॥९॥ हृदाकाशे ॥१०॥ उपाध्यैव भेदः ॥११॥ स्थूलसूक्ष्माज्ञानोपाधिको विश्वः ॥ १२ ॥ सूक्ष्माज्ञानोपाधिकास्तैजसः ॥ १३ ॥ अज्ञानोपाधिकः प्राज्ञः ॥ १४ ॥ न स्वरूपभेदः ॥ १५ ॥ निरुपाधिकस्तुरीयः ॥ १६ ॥ त्रयाधिष्ठानं तुरीयम् ॥ १७ ॥ न बहिःप्रज्ञम् ॥ १८ ॥ न प्रज्ञानघनम् ॥१९॥ नान्तःप्रज्ञम् ॥ २० ॥ नादात्मकम् ॥२१॥ नेन्द्रियज्ञेयम् ॥ २२ ॥

---

अधुना ईश्वरप्राज्ञेतिप्रकारद्वयधारिणः प्राज्ञस्यात्मनः स्वरूपं व्याचष्टे— समष्ट्यज्ञानेति। विश्वतैजसप्राज्ञानां सर्वेषामज्ञानमेवोपाधिः। उपाधिप्रकारकृतो भेदस्तु तेषां भेदस्य मूलम्। तथाहि—स्थूलदेहप्रपञ्चाभिमानाज्ञानोपाधिको विश्वः। सूक्ष्मदेहाभिमानाज्ञानोपाधिकस्तैजसः। अज्ञानोपाधिकः प्राज्ञः। निरुपाधिक ईश्वरः स्वाभिन्नशक्तिमान्। प्राज्ञेश्वरयोर्भेदस्त्वज्ञानभेदकृतः। तथाहि। समष्ट्यज्ञानोपाधिक ईश्वरः। व्यष्ट्यज्ञानोपाधिकः प्राज्ञः। तथा चोक्तम्। कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः इति। उपाध्यैव भेद इति। उपाधिरेव भेदः, अथवा उपाधिनैव भेद इति तु युक्ततरः पाठः। अस्मिन् शाक्तदर्शनसूत्रप्रबन्धे 'सूत्रे लिङ्गवचनमतन्त्रम्' इति न्यायो बहुशो विशेषतः समाध्युपाध्यादिप्रयोगेषूपयुज्यमानो दृश्यते॥

इति प्राज्ञात्मनिरूपणं नामैकोनचत्वारिंशं प्रकरणम्॥

अधुना तुरीयात्मस्वरूपं व्याचष्टे—निरुपाधिकस्तुरीयः इति! त्रयाधिष्ठानमिति। त्रयशब्देनात्र सत्त्वादिगुणत्रयमुच्यते। अयमेवात्मा ब्रह्म पारमार्थिकः शक्तिस्वरूपः। अयं नान्तःप्रज्ञः न बहिःप्रज्ञः। प्रज्ञानघनो नादात्मकः परमार्थरूपः। वैयाकरणप्रतिपादितस्फोटाख्यं तत्त्वं नादात्मकेनात्र प्रतिपादितेन। परमतत्त्वेन समानमवधारणीयम्॥

इति तुरीयात्मनिरूपणं चत्वारिंशं प्रकरणम्॥

न बुद्धेः ॥ २३ ॥. तुरीय आत्मा ब्रह्म ॥ २४ ॥ पारमार्थस्तुरीयः ॥ २५ ॥ अपारमार्थास्त्रयः ॥ २६ ॥ ह्रीकारवर्णरूपा अपारमार्थाः ॥ २७ ॥ नादः परमार्थः ॥ २८ ॥

इति श्रीशाक्तदर्शने अष्टमाध्यायस्य द्वितीय पादः ॥

अथ तृतीयः पादः

अकारो विराड् विश्वरूपी ॥ १ ॥ हिरण्यगर्भात्मकस्तैजस उकारः ॥ २ ॥ ईशात्मकप्राज्ञो मकारः ॥ ३ ॥ साक्ष्यात्मककूटस्थो ध्वनिः ॥ ४ ॥ अ हं ब्रह्म ॥ ५ ॥ उ र विष्णुः ॥ ६ ॥ मनीं रुद्रः ॥ ७ ॥ ओं ह्रीं भुवनेश्वरी शक्तिः ॥ ८ ॥ अकारो ब्रह्मा ॥ ९ ॥ उकारो विष्णुः ॥ १० ॥ मकारो रुद्रः ॥ ध्वनिर्गणपतिः ॥ १२ ॥ ओंकारो ब्रह्म ॥ १३ ॥ ह्रीकारः शक्तिः ॥ १४ ॥ ओं ह्रीं ब्रह्माभिन्ना शक्तिः ॥ १५ ॥ एकाक्षरी ॥ १६ ॥ तज्ज्ञो मुनिः ॥ १७ ॥ असंस्कृतो नाधिकारी ॥ १८ ॥ एकाक्षरमननेन ज्ञानम् ॥ १९ ॥ मुक्तिं तेन ॥ २० ॥ प्रतिबन्धाद्रहितो मणिद्वीपम् ॥ २१ ॥

इति श्रीशाक्तदर्शने अष्टमाध्यायस्य तृतीयः पादः ॥

---

अथ शक्तिस्वरूपमीपद् विशदयति–अकारो विराडिति । ओमित्यक्षरस्य तथैव ह्रीमित्येतस्याक्षरस्य ये घटका वर्णास्तैर्देवतादिस्वरूपाणि प्रतिपाद्यन्ते । अकारहकाराभ्यां विश्वरूपी विराट् ब्रह्मा प्रतिपाद्यते । उकाररेफाभ्यां हिरण्यगर्भात्मकस्तैजसो विष्णुः प्रतिपाद्यते । तथैव मकारेण ईमकारेण च ईशात्मकप्राज्ञरूपी रुद्रः प्रतिपाद्यते । ओं ह्रीमित्यक्षराभ्यामेकाक्षरी शक्तिः प्रतिपाद्यते । सैव ब्रह्म । साक्ष्यात्मककूटस्थस्तुरीय आत्मैव ध्वनिरूपो गणपतिः । अस्या ब्रह्माभिन्नायाः शक्तेर्ज्ञानान्मणिद्वीपप्राप्तिस्तदेव निर्वाणम् । स एव मोक्षः ॥

इति शक्तिस्वरूपनिरूपणं नामैकचत्वारिंशं प्रकरणम् ॥

अथ चतुर्थः पादः

सर्वलोको मणिद्वीपम् ॥ १ ॥ सर्वे लोका यस्यां संस्कार-रूपेण प्रकृत्यात्मकास्तन्मयः सर्वलोकः ॥ २ ॥ तत्रेश्वरी परा शक्तिः ॥ ३ ॥ एकाक्षरपरं न याम्यदूतः ॥ ४ ॥ शक्तिदूत्यमग्निना ॥ ५ ॥ ततो दिनाधिदैवतेन ॥ ६ ॥ शुक्लपक्षाभिमानिना ॥ ७ ॥ अयनेन ॥८॥ ततो वत्सरेण ॥९॥ ततः स्वर्गलोकम् ॥१०॥ दिगीशानाम् ॥ ११ ॥ ब्रह्मभूतेन ब्रह्मलोकम् ॥ १२ ॥ कारणदेहेन सर्वलोकम् ॥ १३ ॥ पारमेश्वरीं भूतिम् ॥ १४ ॥ कृत्यत्रयं विनान्यभूतीः ॥ १५ ॥ स्थूलं सूक्ष्मं स्वेच्छया च ॥ १६ ॥ पुनर्विदेहं कल्पान्ते ॥ १७ ॥

इति श्रीशाक्तदर्शने अष्टमाध्यायस्य चतुर्थः पादः ॥

इत्यष्टमोऽध्यायः समाप्तः ॥

---

अधुना मणिद्वीपं वर्णयति—सर्वलोक इति। सर्वलोकनाम्ना यो ब्रह्मलोको वर्ण्यते तदेव मणिद्वीपम्। गुणत्रययुक्तप्रकृतिस्वरूपे अस्मिन्सर्वे लोकाः संस्काररूपेण तिष्ठन्ति। लब्धशक्तिज्ञानस्य मणिद्वीपं प्रति दूतकर्म प्रथममग्निना क्रियते। ततो दिनाधिदैवतेन सूर्येण। ततः शुक्लपक्षाभिमानिन्या देवतया। तदनन्तरमुत्तरायणेन ततो वत्सरेण स्वर्गलोकं नीयते। ततो ब्रह्मलोकं स गच्छति ततः सर्वलोकनामानं मणिद्वीपम्। कारणदेहयुतः स परमात्मभूतिं लभते। स्वेच्छयासौ स्थूलं सूक्ष्मं वा स्वरूपं धारयति। कल्पान्ते च विदेहस्वरूपं प्राप्नोति ॥

इति मणिद्वीपमार्गनिरूपणं नाम द्वाचत्वारिंशं प्रकरणम् ॥

## अथ नवमोध्यायः ॥

न भवेदज्ञातपदार्थज्ञानं स्वप्ने ॥ १ ॥ जागरानुभवपदार्थज्ञानस्मृतिरेव ॥ २ ॥ स्मृतिज्ञानविषयजागरपदार्थाः सत्यम् ॥ ३ ॥ स्वप्नदृष्टान्ततो जागरपदार्था मिथ्या इति वक्तुं न शक्यते इति गौतमः ॥ ४ ॥ पूर्वकालसंबन्धपदार्थज्ञानं स्मरणरूपम् ॥ ५ ॥ पुरःस्थपदार्थज्ञानं प्रत्यक्षम् ॥ ६ ॥ स्वप्ने न स्मरणम् ॥ ७ ॥ प्रत्यक्षमेव ॥ ८ ॥ अभिज्ञा प्रत्यभिज्ञेति ॥ ९ ॥ केवलेन्द्रियसंबन्धमभिज्ञा प्रत्यक्षम् ॥ १० ॥ पूर्वज्ञानसंस्कारेन्द्रियाभ्यां प्रत्यभिज्ञा प्रत्यक्षम् ॥ ११ ॥ न तेन संस्कारजन्यज्ञानमेव स्मृतिः ॥ १२ ॥ प्रत्यभिज्ञाप्रत्यक्षमपि संस्काजन्यम् ॥ १३ ॥ इन्द्रियसंबन्धराहित्ये केवलसंस्कारजं स्मृतिज्ञानम् ॥ १४ ॥ अश्रुतदृष्टपदार्था अपि

---

अथ गौतममतेन स्वाप्नसृष्टिनिरूपणं करोति। न भवेदिति। पूर्वज्ञातानामेव पदार्थानां ज्ञानं स्वप्ने स्मृतिरूपमुपलभ्यते। स्वप्नादनन्तरं जाग्रदवस्थायां स्वाप्नज्ञानबाधात्स्वाप्नज्ञानं मिथ्येति वक्तुं शक्यते। परंतु येषां जाग्रदवस्थानुभूतानां पदार्थानां ज्ञानं स्मृतिरूपं स्वप्ने भवति ते पदार्था जगति तत्तत्स्थानस्थिता न कदापि बाध्यन्ते। अतः स्वप्नदृष्टान्तेन जाग्रदवस्थानुभूयमानाः पदार्था मिथ्या इति नैव वक्तुं शक्यते ॥

इति गौतमाभिमतस्वाप्नज्ञानस्वरूपनिरूपणं नाम त्रिचत्वारिंशं प्रकरणम् ॥

गौतममतं निरासयति — पूर्वकालसंबन्धेति। पूर्वकालसंबद्धवस्तुनो यज्ज्ञानं तत् स्मरणम्। पुरःस्थितपदार्थज्ञानं प्रत्यक्षम्। स्वप्नज्ञानं न स्मरणम्। किंतु प्रत्यक्षम्। लौकिकप्रत्यक्षस्वाप्नप्रत्यक्षयोस्त्वयमेव भेदः, यल्लौकिके प्रत्यक्षे इन्द्रियार्थयोः संनिकर्षो भवति। संनिकर्षाज्जायमानं तत्प्रत्यक्षं सत्यम्। स्वप्ने तु अश्रुतादृष्टपदार्थानामपि ज्ञानं भवति। नैव च तत्रेन्द्रियार्थसंनिकर्षः। अतः

भ्रान्तिः स्वप्ने ॥ १५ ॥ नेदं ज्ञानं स्मृतिरूपम् ॥ १६ ॥ अतः स्वप्नपदार्थेन जागरावस्था मिथ्येति हयग्रीवः ॥ १७ ॥

इति श्रीशाक्तदर्शने नवमाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयः पादः

न शक्तिलोकवासो मुक्तिः ॥ १ ॥ ब्रह्मलोकवासैव मुक्तिरिति प्रजापतिः ॥२॥ मूलप्रकृतेर्बाह्यान्तर्व्याप्यतदवकाशत्वे तद्गतत्वे च संस्थं सद् व्यावहार्यम् ॥ ३ ॥ अपरमव्यवहार्यम् ॥ ४ ॥ कार्यं ध्वनिर्जगद्बीजम् ॥ ५ ॥ तत्परं कारणम् ॥६॥ कार्यकारणैकरूपत्वे संस्थं तन् सत् ॥ ७ ॥ व्यावहार ईशः शबलः ॥ ८ ॥ उपहितो जगद्बीजः पारमार्थः ॥ ९ ॥ अमूर्तः शबलः कारणेशः ॥ १० ॥ मूर्तः कार्य ईशः ॥ ११ ॥ कार्येश्वरा ब्रह्मविष्णुरुद्राः ॥ १२ ॥ तल्लोको ब्रह्मलोकः ॥ १३ ॥ कारणेशलोको मणिद्वीपम् ॥ १४ ॥

---

स्वप्नज्ञानं भ्रान्तिरूपम् । जागरितावस्थायां च तस्य बाधो भवति । अतः बाधहेतुतया यथा स्वाप्नप्रपञ्चो मिथ्या तथैव जागरावस्थायामनुभूयमानः प्रपञ्चोपि मिथ्यैवेति सूत्रकारस्याभिप्रायः ॥

इति प्रपञ्चमिथ्यात्वं नाम चतुश्चत्वारिंशं प्रकरणम् ॥

अथ मुक्तिविषये प्रजापतिमतनिरासपूर्वकं स्वसिद्धान्तमाचष्टे। तत्रादौ प्रजापतिमतं प्रतिपादयति—**न शक्तिलोकेति** । प्रजापतिमतेन ब्रह्मलोकवास एव मुक्तिः सा च ब्रह्मज्ञानादेव भवति न शक्तिज्ञानात् । सूत्रकारः स्वमतमाह—**मूलप्रकृतेरिति** । सत्तत्त्वं द्विप्रकारकम् — व्यावहार्यम्, अव्यवहार्यं च । बाह्यमान्तरं च वस्तुजातं व्याप्यान्तर्गतत्वेन स्थिता प्रकृतिः व्यावहार्यसत्तत्वमिति निगद्यते । अस्माद् व्यावहार्यप्रकृतिस्वरूपात्परं यन्मूलप्रकृतिस्वरूप तदव्यवहार्यं सत् । तथैव कारणरूपं सत् मूलप्रकृतिरेव, कार्यरूपं ध्वनिः स एव जगन्मूलम् । अधुनेशस्वरूपं निरूपयति — **व्यावहार ईश इति** । ईशोपि कार्यरूपः कारण-

अन्तःकरणोपाधिर्ब्रह्मलोके ॥ १५ ॥ अविद्या मणिद्वीपे ॥ १६ ॥ पतनं ब्रह्मलोकात् ॥ १७ ॥ न क्वचिन्मणिद्वीपात् ॥ १८ ॥ मणिद्वीपवासो मुक्तिरेवेति हयग्रीवः ॥ १९ ॥

इति श्रीशाक्तदर्शने नवमाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः

न मुक्तिर्मणिद्वीपवासः ॥ १ ॥ भुवनेश्वरी साभासा माया ॥ २ ॥ भूमिवत्तामसी ॥ ३ ॥ जलवत्सत्त्वम् ॥ ४ ॥ जलसूर्यवज्जीवेशौ ॥ ५ ॥ सूर्यप्रतिबिम्बाढ्यजलवच्छक्तिः ॥ ६ ॥ प्रलये जीवाः प्रकृतिं गताः ॥ ७ ॥ तद्वन्मणिद्वीपगाः ॥ ८ ॥ प्रकृतिगा देहिनः सृष्ट्याम् ॥ ९ ॥ तथा ते च ॥ १० ॥ न तेन मुक्तिरिति बादरिः ॥ ११ ॥

इति श्रीशाक्तदर्शने नवमाध्यायस्य तृतीयः पादः ॥

---

रूपश्च । कार्यरूप ईशो मूर्तस्त्रिप्रकारः ब्रह्मविष्णुरुद्रस्वरूपैः कार्यशानां लोको ब्रह्मलोक. । स च कारणेशलोकान्मणिद्वीपाद्भिन्नः । ब्रह्मलोकस्यान्त करणोपाधिस्तत्र गतो नरः पुण्यक्षयादनन्तर पतत्येव । मणिद्वीपोऽविद्योपाधिस्तत्र गतस्तु सद्व मुक्तः ॥

इति मणिद्वीपवासनिरूपण नाम पञ्चचत्वारिंश प्रकरणम् ॥

अधुना मुक्तिस्वरूपविषये पूर्वपक्षरूपेण बादरिमत व्याचष्टे — **न मुक्तिर्मणिद्वीप इत्यादिना** । मणिद्वीपस्वामिनी भुवनेश्वरी मायारूपा स्वाभासेन जीवेशकर्त्री । तथा च श्रुति. । आभासेन जीवेशो करोतीति । जीवेशयो. स्वरूप च जलप्रतिबिम्बितसूर्यवद्वर्तते । शक्तिस्वरूप च सूर्यप्रतिबिम्बाधारजलसदृशमेव । प्रलये जीवा यथा प्रकृति गच्छन्ति तथैव मणिद्वीपगा अपि मायारूपप्रकृतिगता वर्तन्ते । सृष्ट्यारम्भे च पूर्वस्वरूप पुनस्तेषामावश्यकमेव । अतो मणिद्वीपवासो मुक्तिरिति न समञ्जसम् ॥

इति बादरिमतनिरूपण नाम षट्चत्वारिंश प्रकरणम् ।

अथ चतुर्थः पादः

प्रकृतिं गतः संचितकर्मणा च ॥ १ ॥ पुनस्तेन देही ॥ २ ॥ दग्धकर्मा शाक्तज्ञानी ॥ ३ ॥ न पुनरावर्तनं तेन ॥ ४ ॥ साक्षिरूपशक्तिज्ञानात्कैवल्यम् ॥ ५ ॥ ईशज्ञानान्मणिद्वीपम् ॥ ६ ॥ ईश्वरज्ञानी योगी ॥ ७ ॥ न च्युतिर्योगिनः ॥ ८ ॥ बुद्ध्यारूढं शाक्तं तेजः शाक्तज्ञानम् ॥९॥ व्यक्तोपासनात्कार्यस्थानम् ॥१०॥ ब्रह्मलोकवत् ॥ ११ ॥ संदिग्धो जन्म ॥ १२ ॥ असंदिग्धो ब्रह्मा ॥ १३ ॥ सर्वलोकमणिद्वीपवासो मुक्तिरेवेति हयग्रीवः ॥ १४ ॥

इति श्रीशाक्तदर्शने नवमाध्यायस्य चतुर्थः पादः ॥

नवमोध्यायः समाप्तः ॥

---

अधुना बादरिमतं निरासयति—**प्रकृतिं गत** इति। यद्यपि मणिद्वीपगा जीवाः संचितकर्मणा प्रकृतिं गता इति कथ्यन्ते तथापि तत्र शाक्तज्ञानप्रभावतः तेषां कर्मणः समूलदाहान्न तेषां संसारे पुनरावर्तनशङ्कालवोपि। शक्तिज्ञानस्य साक्षिचैतन्यस्वरूपत्वादेषां जीवानां कैवल्यप्राप्तिरेव। न कदापि तेषां पतनं संभवति। अधुना व्यक्तोपासनाफलं निरूपयति—**व्यक्तोपासनादि**ति। व्यक्तानामीश्वराणां ब्रह्मविष्णुमहेशानामुपासनया जीवैः कार्यब्रह्मणः स्थानं ब्रह्मलोकरूपं प्राप्यते ते च पुनरावर्तन्ते। तेषां **जन्म संदिग्धं** नाम न निश्चितत्वेन तेषां मुक्तिरिति॥

इति मणिद्वीपवासनिरूपणं नाम सप्तचत्वारिंशं प्रकरणम् ॥

अथ दशमोऽध्यायः ।

ब्रह्मरूपे शक्तिपरः शाक्तः ॥१॥ निर्विकल्पसमाधिपरो ज्ञानी सिद्धो मुक्तः ॥ २ ॥ मुमुक्षुतैकसाधनाढ्यः कर्माधिकारी ॥ ३ ॥ विवेकभक्तिभ्यामुपासनस्य ॥ ४ ॥ वैराग्येण च योगस्य ॥ ५ ॥ ज्ञानस्य विवेकादिचतुष्टयेन ॥ ६ ॥ निष्कामकर्मपरः कर्मनिष्ठः कर्मयोगी ॥ ७ ॥ नवरसात्मकभक्तिपरो भक्तियोगी ॥८॥ जपपरो मन्त्रयोगी ॥ ९ ॥ योगनिष्ठो वैराग्ययोगी ॥ १० ॥ ज्ञाननिष्ठो ज्ञानयोगी ॥ ११ ॥ सविकल्पसमाधिर्निदिध्यानः ॥ १२ ॥

इति श्रीशाक्तदर्शने दशमाध्यायस्य प्रथमः पादः ॥

अथ द्वितीय पाद

ब्रह्मलोकान्तं कर्मनिष्ठः ॥ १ ॥ उपासकः कार्यस्थानम् ॥२॥ योगनिष्ठः कारणम् ॥३॥ कैवल्यं ज्ञानी ॥४॥ शक्त्यधिष्ठिता प्रकृतिः सर्वलोकः ॥ ५ ॥ मणिद्वीपमिति च ॥ ६ ॥ स्थूलप्रपञ्च-

---

अथ योगिप्रभेदान्निरूपयति — ब्रह्मरूपे इति । ते च कर्मयोगि–भक्तियोगि–मन्त्रयोगि–वैराग्ययोगि–ज्ञानयोगिन उत्तरोत्तर श्रेष्ठा । तेषां पञ्चाना यथाक्रम निष्कामकर्म–नवरसात्मकभक्ति–जप – योग – ज्ञानरूपा पञ्च व्यापारा दर्शिता । शाक्तज्ञानी च सर्वथा श्रेष्ठ इति सिद्धान्त ॥

इति योगिप्रभेदो नामाष्टचत्वारिंश प्रकरणम् ॥

उपरिवर्णितानां योगिनां प्राप्तव्यस्थान निरूपयति—ब्रह्मलोकान्तमिति । कर्मनिष्ठो ब्रह्मलोकपर्यन्त गच्छति । उपासको नाम भक्तियोगी ईश्वरकार्यस्थान जगद्बीजरूप प्राप्नोति । योगनिष्ठो वैराग्ययोगी कारणस्थान मूलप्रकृतिस्वरूप प्राप्नोति । ज्ञानी तु शक्त्यधिष्ठितप्रकृतिरूप कैवल्य प्राप्नोति । शक्त्यधिष्ठितप्रकृतिलोक एवाय सर्वलोकसंज्ञा तथा मणिद्वीपसंज्ञा लभते । एतेषु चतुर्षु लोकेषु प्रकृतिः कथ वर्तते तद्दर्शयति । स्थूलप्रपञ्चेति । कर्मनिष्ठप्राप्ये ब्रह्मलोके स्थूलप्रपञ्च–

संस्कारात्मिका लोहमयी ॥ ७ ॥ विकारसंस्कारात्मिका रत्नमयी ॥ ८ ॥ प्रकृतिसंस्कारात्मिका चिन्तारत्नमयी ॥ ९ ॥ चिन्तामणिगृहान्तःस्था तेन शक्तिः ॥ १० ॥ शाश्वतज्ञानिनश्चिन्तामणिगेहम् ॥ ११ ॥

इति श्रीशाक्तदर्शने दशमाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः

चिन्तामणिगेहः शक्तेः ॥ १ ॥ न लोकः ॥ २ ॥ चिन्तामणिमयो गणेशलोकः ॥ ३ ॥ कार्यस्थानं गणेशस्य ॥ ४ ॥ सत्त्वमाया चिन्तामणिः ॥ ५ ॥ कारणप्रपञ्चवासनायुक्तः ॥ ६ ॥ वर्जितः स्थूलसूक्ष्माभ्याम् ॥ ७ ॥ समष्टिबुद्ध्युपहितः साक्षी गणेशस्तद्वीपपतिः ॥ ८ ॥ प्रपञ्चद्वयवासनारहितास्तदुपासकास्तल्लोकम् ॥ ९ ॥ चिन्तामणिगेहवासिनः सर्वेपि ॥ १० ॥ न च्युतिं कदापि ॥ ११ ॥ स्वसंवेद्यमानमानन्दं स्वानन्दम् ॥१२॥ तद्भवनं निजलोकः ॥१३॥

---

संस्कारात्मिका लोहमयी प्रकृतिर्वर्तते । भक्तिनिष्ठप्राप्ये कार्यस्थानात्मके लोके विकारसंस्कारात्मिका रत्नमयी प्रकृतिर्वर्तते । ततोपि श्रेयो मणिद्वीपं यत्र अष्टप्रकृतिसंस्कारात्मिका चिन्तारत्नमयी प्रकृतिर्वर्तते । इष्टवस्तुलाभदानं चिन्तारत्नप्रभावः । महदादिसप्तप्रकृतिविकृतिसहितं मूलप्रकृतिस्वरूपमत्र अष्टप्रकृतिसंस्कारत्वेन गृह्यते । अस्य चिन्तामणिगृहस्यान्तर्वर्ति शक्तिस्थानं चिन्तामणिगेहमिति वर्ण्यते ॥

इति चिन्तामणिगेहस्वरूपकथनं नामैकोनपञ्चाशत्तमं प्रकरणम् ॥

चिन्तामणिद्वीपवासो नैव मुक्तिरूपः स्यादिति गर्गमतं पूर्वपक्षरूपेण समाचष्टे—चिन्तामणिगेहः शक्तेरिति । चिन्तामणिरूपं यच्छक्तेर्गेहं तस्माच्चिन्तामणिमयो लोको भिद्यत एव । चिन्तामणिः सत्त्वमाया गणेशस्य कार्यस्थानं कारणप्रपञ्चवासनायुक्तम् । गणेशस्तत्र साक्षिरूपेण वर्तते । अस्मिल्लोके प्रपञ्च-

अद्वैतभावनारूपनिर्विकल्पसमाधिपरः प्रपञ्चत्रयवासनारहितः स्वानन्दभवनम् ॥ १४ ॥ अद्वैतावस्थानरूपनिर्विकल्पसंपन्नो ब्रह्मीभूतः ॥ १५ ॥ आनन्दाधिक्यं निजलोके ॥ १६ ॥ प्रपञ्चत्रयवासनायुक्तमणिद्वीपवासो न मुक्तिरिति गर्गः ॥ १७ ॥

इति श्रीशाक्तदर्शने दशमाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पादः

चिन्तामणिगृह एव चिन्तामणिद्वीपमिति गाणपाः ॥ १ ॥ सृष्टयनादित्वात् कारणप्रपञ्चमयी प्रपञ्चत्रयवासना चिन्ता ॥ २ ॥ कारणप्रपञ्चानादित्वाद्वासनाद्वयराहित्यान्मुक्तः ॥ ३ ॥ शान्तिमायामयो निजलोकः ॥ ४ ॥ तत्र ब्रह्मनिष्ठा ॥ ५ ॥ ब्रह्माभिन्ना ॥ ६ ॥

---

द्वयवासनारहितास्तिष्ठन्ति स्वसंवेद्यमानमानन्दमनुभवन्ति । अद्वैतभावनारूपनिर्विकल्पसमाधिपरास्तु स्थूलसूक्ष्मकारणरूपप्रपञ्चत्रयवासनारहिता ब्रह्मीभूता निजलोकं नाम ब्रह्मलोकं गच्छन्ति । न च ते पुनरावर्तन्ते । मुक्तिर्ब्रह्मलोक एव । यतश्चिन्तामणिद्वीपवासः प्रपञ्चत्रयवासनायुक्तः अत एव न तत्र मुक्तिरिति गर्गाचार्यमतम् ॥

इति गर्गमतनिरूपणं नाम पञ्चाशत्तमं प्रकरणम् ॥

अथ सूत्रत्रयेण गाणपतमतं व्याचष्टे – चिन्तामणिगृह एवेति । तन्मते चिन्तामणिगृहमेव चिन्तामणिद्वीपम् । अनादित्वात्सृष्टेः प्रपञ्चत्रयवासनान्वितत्वम् । तत्र स्थूलसूक्ष्मप्रपञ्चवासनाद्वयराहित्येन केवलं कारणप्रपञ्चवासनायुतत्वं मुक्तत्वम् ॥

इति गाणपतमतनिरूपणं नामैकपञ्चाशत्तमं प्रकरणम् ।

गर्गगाणपतमते निराकरोति – शान्तिमायामय इति । शक्तिरूपात्मनो लोकः अनादिमायामयः । ब्रह्मनिष्ठाः शक्तिज्ञानिनस्तत्र गच्छन्ति । तत्र ब्रह्माभिन्ना शक्तिर्वर्तते तस्याश्च पार्श्वभूते सिद्धिर्बुद्धिरिति द्वे साक्षिभूते । अनुभूति

ईश्वरी भिन्नाभिन्ना ॥ ७ ॥ सैव सिद्धिर्बुद्धीति साक्षिणी ॥ ८ ॥ तद्विना न साक्षित्वम् ॥ ९ ॥ ते शक्तिपार्श्वभूते ॥ १० ॥ बुद्धिर्ज्ञानम् ॥ ११ ॥ अनुभवः सिद्धिः ॥ १२ ॥ ज्ञानसिद्धिः सानन्दम् ॥ १३ ॥ तदानन्दभवनम् ॥ १४ ॥ तदानन्दं मणिद्वीप एव ॥ १५ ॥ न तत् पृथक् ॥ १६ ॥ नेशः साक्षिरहितः ॥ १७ ॥ अतो मणिद्वीपवासो मुक्तिरेवेति हयग्रीवः ॥ १८ ॥

इति श्रीशाक्तदर्शने दशमाध्यायस्य चतुर्थः पादः ॥

दशमाध्यायश्च समाप्तः

---

## अथैकादशोऽध्यायः ।

अद्वैतावस्थानसमाधिस्थो ज्ञानी ॥ १ ॥ अद्वैतभावनारूपसमाधिस्थो ज्ञानयोगी ॥ २ ॥ तत्त्वंपदार्थशोधनपरो ज्ञाननिष्ठः ॥ ३ ॥ महावाक्यानुसारज्ञानमेव ज्ञानम् ॥ ४ ॥ न सांख्यादिशास्त्रजः ॥ ५ ॥ पदार्थसंबन्धो वृत्तिः ॥ ६ ॥ यौगिका रूढिर्योग-

---

रूपायाः सिद्धेर्बुद्धया नाम ज्ञानेन तत्र महानानन्दः । आनन्दस्वरूपमेव मणिद्वीपम् । मणिद्वीपवासश्च मुक्तिरिति सिद्धान्त. आनन्दस्वरूपस्यास्य विस्तरस्तु तैत्तिरीयोपनिषदि आनन्दवल्ल्या द्रष्टव्यः ॥

इति मणिद्वीपवासनिरूपणं नाम द्विपञ्चाशत्तम प्रकरणम् ॥

अथात्मज्ञानिस्वरूपमाचष्टे — अद्वैतावस्थानेति । तत्त्वमस्यादिमहावाक्याना ज्ञानमेव यथार्थज्ञानम् । तज्ज्ञानस्वरूपशोधननिष्ठो ज्ञाननिष्ठ. । अद्वैतभावनारूपसमाधिस्थितो ज्ञानयोगी तद्वदद्वैतावस्थानसमाधिस्थ ज्ञानी । स एव मुक्तो मणिद्वीपरूपशक्तिलोकस्थित' ॥

इति ज्ञानिस्वरूपनिरूपण नाम त्रिपञ्चाशत्तम प्रकरणम् ॥

अथ तत्त्वमस्यादिमहावाक्यार्थ विवेचयति । तत्र च प्रथम लक्षणादिवृत्तिस्वरूपमाचष्टे — पदार्थसंबन्धो वृत्तिरिति । जगति तत्र तत्र वर्तमानानां पदार्थानां ज्ञान पदार्थेन्द्रियसबन्ध विना न भवति । पदार्थज्ञानं च पदप्रतिपाद्य-

रूढीति ॥ ७ ॥ शब्दसंबन्धो लक्षणारूपः ॥ ८ ॥ यस्मिन्पदार्थे शक्तिस्तदर्थः शक्यः ॥ ९ ॥ शक्यार्थो वाच्यः ॥ १० ॥ वाच्यार्थबोधकं वाचकम् ॥ ११ ॥ लक्षणाज्ञेयो लक्ष्यः ॥ १२ ॥ वाच्यत्यागेन संबन्धप्रतीतिर्जहल्लक्षणा ॥ १३ ॥ वाच्यसहितसंबन्धार्थप्रतीतिरजहल्लक्षणा ॥ १४ ॥ वाच्यार्थे भागत्यागो भागत्यागलक्षणा ॥ १५ ॥ महावाक्यसार्वभौमस्तत्त्वमसि ॥ १६ ॥ तत्पदार्थवाच्य ईश्वरः ॥ १७ ॥ त्वंपदार्थवाच्यो जीवः ॥ १८ ॥ वाच्यौ व्यावहारिकजीवेशौ ॥ १९ ॥ लक्ष्यौ पारमार्थौ ॥ २० ॥ वाच्यत्यागेन लक्ष्यभागचैकत्वम् ॥ २१ ॥ समष्ट्यां त्वंपदार्थः पारमार्थ ईशः ॥ २२ ॥ तत्पदार्थो निर्गुणं ब्रह्म ॥ २३ ॥ एकत्वं सत्पदे ॥ २४ ॥

इति श्रीशाक्तदर्शने एकादशाध्यायस्य प्रथमः पादः ॥

---

मानार्थज्ञानं विना न भवति। पदस्यार्थेन यः सबन्धः स वृत्तिरिति निगद्यते। वृत्तिरियं त्रिप्रकारा। धात्वर्थमनुवर्तमाना यौगिकी। लोकसकेतमेव केवलमनुवर्तमाना रूढिः। अंशेन धात्वर्थमशेन च संकेतमनुवर्तमाना योगरूढिरिति। पदेनार्थाभिधानं त्रिभिः प्रकारैर्भवति। अभिधया लक्षणया व्यञ्जनया च। एवमभिहितोर्थो यथासंख्यं वाच्यो लक्ष्यो व्यङ्ग्यश्च निगद्यते। वाच्यार्थ एव शक्यार्थ इति वर्ण्यते। विवक्षितोर्थोभिधया यत्र न प्रतिपाद्यते तत्र लक्षणा स्वीकर्तव्या भवति। क्वचित्स्थलेषु वाच्यार्थलक्ष्यार्थव्यतिरिक्तोप्यर्थो विवक्षितो भवति। स व्यङ्ग्यार्थ इति कथ्यते। तत्त्वमसीत्यत्र तत्पदेन सर्वत्रगमीश्वरस्वरूपं ब्रह्माभिधीयते, त्वपदेन च जीवात्माभिधीयते। तत्त्वमसीत्यत्र वाक्ये तत्त्वपदयोः सामानाधिकरण्यं वर्तते। तत्संपादनाय च लक्षणया पारमार्थिकं सत्पदवाच्यं शक्तिरूपं स्वीक्रियते। लाक्षणिकार्थविस्तरस्तु पञ्चदशीसिद्धान्तबिन्द्वादिग्रन्थेष्ववलोकनीयः ॥

इति लक्षणावृत्तिनिरूपण नाम चतुःपञ्चाशत्तमं प्रकरणम् ॥

## अथ द्वितीयः पादः

संबन्धत्रयेणाखण्डार्थबोधकं तत्त्वमसि ॥ १ ॥ स देवदत्तोयं पदसमानाधिकरणीयम् ॥ २ ॥ स एवायं विशेषणविशेष्यभावः ॥ ३ ॥ स एवायमिति वाक्यविरुद्धधर्मत्यागो लक्ष्यलक्षणभावसंबन्धः ॥ ४ ॥ तत्त्वंपदार्थयोर्भागत्यागलक्षणाखण्डचैतन्यसिद्धिश्च ॥ ५ ॥ उपदेशवाक्योयं देहिनाम् ॥ ६ ॥ स्तुतिवाक्यं ब्रह्मणि ॥ ७ ॥ अयमात्मा ब्रह्म ॥ ८ ॥ आत्मवाच्यो जीवः ॥ ९ ॥ ब्रह्म ईश्वरः ॥ १० ॥ न लक्ष्यार्थः परोक्ष इति स चेत् कथम् ॥ ११ ॥ अहं ब्रह्मास्मि ॥ १२ ॥ अहं जीवः ॥ १३ ॥ ईश्वरो ब्रह्म ॥१४॥ चेतनभागलक्षणासूचक अस्मि ॥ १५ ॥ प्रज्ञानं जीवसाक्षी ॥१६॥ ब्रह्म ईशसाक्षी ॥ १७ ॥ साक्ष्यभेदः ॥ १८ ॥

इति श्रीशाश्वतदर्शने एकादशाध्यायस्य द्वितीयः पादः ॥

---

अथ तत्त्वमस्यादिमहावाक्यानां लक्षणया परमात्मस्वरूपप्रतिपादनपरत्वं दर्शयति – **संबन्धत्रयेणेति**। तत्त्वमसीत्येतद्वाक्यं शक्तिस्वरूपपरमात्मप्रतिपादकम्। तत्र तत्त्वंपदयोः सामानाधिकरण्याल्लक्षणया अखण्डार्थबोधकत्वं वाक्यस्य। संबन्धत्रयमिति पदं न सुस्पष्टार्थम्। कदाचिद्वाच्यवाचकभावलक्ष्यलक्षकभावव्यङ्ग्यव्यञ्जकभावरूपं संबन्धत्रयमभिप्रेतं स्यात्कदाचित्तत्पदस्य त्वंपदेनैकस्त्वंपदस्यासिपदेन द्वितीयस्तत्पदस्यासिपदेन तृतीय एवं तत् त्रयं स्यात्। **स देवदत्तोयमिति**। सामानाधिकरण्यस्योदाहरणमत्र निदर्श्यते। अत्र विशेषणविशेष्ययोरेकरूपत्वसंपादने द्वयोरपि पदयोरेकत्वविरुद्धा ये धर्मास्तेषां त्यागः कर्तव्यतयापतति। धर्मत्यागानन्तरं यत्सामान्यस्वरूपमुर्वरितं भवति स लक्ष्यार्थस्तत्त्वपदयोः परमात्मरूपः। अतोत्र भागत्यागात्मिकां जहल्लक्षणां स्वीकृत्य तत्त्वंपदाभ्यामखण्डं ब्रह्म प्रतिपाद्यते। **उपदेशवाक्योयमिति**। वाक्य इति सौत्रं पुंस्त्वम्। **अयमात्मा ब्रह्मेति**। अहं ब्रह्मास्मीति। अत्रापि आत्मब्रह्मपदयोर्लक्षणया शुद्धपरमात्मैवार्थो गृह्यते। तत्र चेतनभागस्य लाक्षणिकार्थतया ग्राह्यत्वमस्मीतिपदेन सूच्यते। सूचक अस्मीति पाठो दुष्टः। कदाचित्सूचकमस्मीत्येतत्स्यात्।

अथ तृतीयः पादः

देवी ह्येकाग्रे आसीत् ॥ १ ॥ सृष्ट्यादिक्रीडासक्ता देवी जगत्सृष्टेः पूर्वमासीदिति ॥ २ ॥ वासुदेवो वा इदमग्र आसीत् ॥३॥ इति न चैवम् ॥ ४ ॥ सत्त्वविशिष्टो विष्णुर्वासुदेवः ॥ ५ ॥ न मूर्तियुतः ॥ ६ ॥ देवीगर्भस्य आभासे सत्त्वभागमयः ॥ ७ ॥ मातृगर्भस्थशिशुवत् ॥ ८ ॥ न तथा पृथग्भावत्वम् ॥ ९ ॥ तद्वाक्येन देव्येव ॥ १० ॥ त्रयाणां व्यावहारा मूर्तित्वे ॥ ११ ॥ नामूर्तित्वे ॥ १२ ॥ त्रिमूर्तय इति ॥ १३ ॥ अहं गणपतिरेक एवासानि ॥ १४ ॥ मत्तः कालमायागुणाः ॥ १५ ॥ कालो हिरण्यपुरुषः ॥ १६ ॥ माया शक्तिः ॥ १७ ॥ गुणा ब्रह्मविष्णुरुद्राः ॥ १८ ॥ मदीक्षणात् पञ्च मदभिन्ना मे प्रतिबिम्बभूताः ॥ १९ ॥

---

एतेषु जीवेश्वरप्रतिपादकेषु वाक्येषु जीववाचकपदैर्जीवसाक्षि प्रज्ञानं गृह्यते। तथेशवाचकपदैरीशसाक्षि ब्रह्म गृह्यते। साक्षित्वेन द्वयोरभेदः ॥

इति महावाक्यार्थनिरूपणं नाम पञ्चपञ्चाशत्तमं प्रकरणम् ॥

अथ देव्याः परमात्मत्वं व्याचष्टे – देवी ह्येकाग्र इति। देवी ह्येकाग्र इति वाक्येन देव्याः परमतत्त्वस्वरूपं प्रतिज्ञायते तथैवानन्तरं वासुदेवो वेत्यनेन वासुदेवस्य परमतत्त्वस्वरूपं प्रतिज्ञायते। सत्त्वविशिष्टेति। सत्त्वविशिष्टं शक्तेः स्वरूपं विष्णुरूपम्। तदेव वासुदेवशब्देन प्रतिपाद्यते। यथा गर्भस्थो शिशुर्न पृथग्भाति तथैव वासुदेवाख्यं विष्णुतत्त्वं न शक्तितः पृथग्भाति। देवीगर्भस्येति। अत्र आभासे इत्यपपाठो भाति। आभास इति भवितव्यम्। तद्वाक्येन देव्येवेति। देवीविष्णुवासुदेवेति त्रयाणां मूर्तस्वरूपे भेदः। अमूर्तस्वरूपे तु सर्वपां शक्त्यात्मकत्वमेव ॥

इति देवीपरमतत्त्वनिरूपणं नाम षट्पञ्चाशत्तमं प्रकरणम् ॥

अथ गणपतिरेवैकं तत्त्वमिति च्यवनभार्गवमतं प्राह – अहं गणपतिरेक इति। अस्मिन्महावाक्ये गणपतिरेव परमतत्त्वतया प्रतिपाद्यते। तत एव च कालो मायासत्त्वादिगुणत्रयं च प्रवर्तते। कालो हिरण्यगर्भः। माया शक्तिः।

तेनाहं पञ्चजनकः ॥ २० ॥ देवी ह्येकाग्र आसीन्निपिद्धम ॥ २१ ॥ प्रतिबिम्बेन बिम्ब एव ॥ २२ ॥ सर्ववाक्यैर्गणपतिरेवेति भार्गवश्च्यवनः ॥ २३ ॥

इति श्रीशाक्तदर्शने एकादशाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थः पाद.

सदेवेतिस्थाने गणपतिरेवेति ॥ १ ॥ मूलप्रकृतेर्बाह्यान्तर्व्याप्यस्थं ब्रह्म सत् ॥ २ ॥ सदाभिन्ना मूलप्रकृतिः शक्तिः ॥ ३ ॥ सा सामर्थ्यरूपा ॥ ४ ॥ शक्तिहीनो निरर्थकः ॥ ५ ॥ व्यावहारब्रह्मत्वं शक्तियोगेन ॥ ६ ॥ व्यावहारब्रह्मण्यभेदत्वे तुर्ये ॥ ७ ॥ भिन्नत्वे कारणे च ॥ ८ ॥ तुर्ये व्यक्तत्वे ॥ ९ ॥ व्यावहारब्रह्मणो व्यक्तावस्थायां गणपतिरिति ॥ ११ ॥ व्यक्तत्वं शक्तेरेव ॥१२॥

---

सत्त्वरजस्तमोरूपा ब्रह्मविष्णुरुद्राः सर्वे गणपतिप्रतिबिम्बभूता ईक्षणाद्गणपतेः प्रादुर्भूताः। प्रतिबिम्बपरैर्वाक्यैर्बिम्बमेव बोध्यते। सर्वैः कारणवाक्यैर्महावाक्यैश्च गणपतिरेव परं तत्त्वं बोध्यते ॥

इति च्यवनभार्गवमतं नाम सप्तपञ्चाशत्तमं प्रकरणम् ॥

*अथ गाणपतमतनिरासेन स्वमतमाह* — सदेवेति। *अहं गणपतिरेक एवासानि* इत्यत्र केवलं सच्छब्दस्य स्थाने गणपतिशब्दप्रयोगः। तथा च गणपतिशब्देन प्रकृतेरन्तर्बहिश्च व्याप्य स्थितं सदेव बोध्यते। शक्तिश्च सतोऽभिन्ना। शक्तियुक्तं सदेव व्यावहारिकं ब्रह्म। व्यावहारब्रह्मण्यभेदत्वे तुर्ये इति। इदं सूत्रमनन्तरं त्रीणि च न स्पष्टार्थं कमपि बोधयन्ति। अभेदत्वे तुर्ये भिन्नत्वे कारणे इत्यादिसप्तम्यन्तानां पदानां पाठः प्रामादिकः स्यात्। तुर्ये ब्रह्मस्वरूपे सर्वेषामभेदः। व्यक्तावस्थायां तु ब्रह्मणः सर्वत्र भेदोद्गम इति भावार्थो भाति। व्यावहारब्रह्मण इति। ब्रह्म यदा व्यक्तां व्यावहारिकीमवस्थां प्राप्नोति तदा तस्य *गणपतिरिति नाम*। अस्यां गणपतिरूपायामवस्थायां शक्तिर्व्यक्ता भवति। अत एव *गणपतिः शक्तिपुत्र इति* व्यवह्रियते। *गणपतिशब्दं*

अतो गणपतेः कारणं शक्तिरेव ॥ १३ ॥ गणपतिकारणैः सद्ब्रह्म ॥ १४ ॥ न व्यवहारो ब्रह्मणः ॥ १५ ॥ सद्ब्रह्मस्थशक्तिरेव गणपतिकारणवाक्यैर्बोध्यत इति हयग्रीवः ॥ १६ ॥

इति श्रीशाक्तदर्शने एकादशाध्यायस्य चतुर्थ पादः ॥

एकादशाध्यायश्च समाप्तः ॥

---

## अथ द्वादशोध्यायः

शिव एव केवलस्तदक्षरः ॥ १ ॥ तस्माद् ब्रह्मविष्णुरुद्राः संप्रसूयन्ते ॥ २ ॥ इति शाक्तं निषिध्यते ॥ ३ ॥ शिवस्यैव कारणत्वम् ॥ ४ ॥ तत्सामर्थ्यरूपा शक्तिस्तदधीना ॥ ५ ॥ बिम्बभूतः पारमार्थः ॥ ६ ॥ अपरः प्रतिबिम्बभूतः ॥ ७ ॥ व्यावहारे मध्यभाग ईश्वरः ॥ ८ ॥ वामभागः शक्तिः ॥ दक्षिणः कालः ॥ १० ॥ कालेश्वयोरभेदत्वम् ॥ ११ ॥ वामभागात्मिका शक्तिः ॥ १२ ॥ व्यक्तेः गुणभेदात् ॥ १३ ॥ तथैव शक्तिः ॥ १४ ॥ शक्तेः प्रतिरीश्वरः ॥ १५ ॥ शक्तिकारणवाक्यैः शिव एवेति नन्दिकेशः ॥ १६ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य प्रथमः पादः ॥

---

प्रयुज्यमानानि कारणवाक्यानि सद्ब्रह्मबोधकानीति तत्त्वम् ॥

इति भार्गवच्यवनमतनिरासो नामाष्टपञ्चाशत्तम प्रकरणम् ॥

अथ नन्दिकेशप्रोक्त शैव मत निरूपयति – शिव एव केवल इति । अस्मिन्मते शिव एव परममक्षरं तत्त्वम् । तदधीना तत्सामर्थ्यरूपा शक्तिः, न स्वतन्त्रा । शिव. परमतत्त्वरूपः बिम्बभूतः । प्रतिबिम्बभूतस्तु व्यावहारिकः शिवः । व्यावहारिकस्य व्यक्तगुणत्रयस्य मध्यभाग ईश्वरो वामभागः शक्तिर्दक्षिणः कालः । शक्तिकारणप्रतिपादकैर्वाक्यैः शिव एव बोध्यते ॥

इति नन्दिकेशमतनिरूपणं नामैकोनषष्टितम प्रकरणम् ॥

अथ द्वितीयः पादः

शिवाभिधेयेन व्यावहार ईश्वरः ॥ १ ॥ अव्यक्तः ॥ २ ॥ व्यक्तेस्त्रिधा ॥ ३ ॥ न चैकतः ॥ ४ ॥ तथा तस्य शक्तिः ॥ ५ ॥ तुर्यशक्तिरपि श्रुतेः ॥ ६ ॥ न तथा व्यावहारेशः ॥ ७ ॥ तेन शक्तिर्न तदधीना ॥ ८ ॥ न शिवो बिम्बभूतः ॥ ९ ॥ बिम्बभूतो गणेशः ॥ १० ॥ गुणत्रयैर्व्यशान्तिमूलप्रकृतिगतः ॥ ११ ॥ तन्निष्ठा शक्तिर्बिम्बभूता ॥ १२ ॥ शिवादिकारणवाक्यैः शक्तिरेवेति हयग्रीवः ॥ १३ ॥

इति श्रीशाक्तदर्शने द्वादशाध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः ॥

ब्रह्म वा इदमग्र आसीत् ॥ १ ॥ आत्मा वा इदमग्र आसीत्

---

अथ नन्दिकेशमतं निरासयति—शिवाभिधेयेनेति । नन्दिकेशमते यच्छिव-शब्देन परमतत्त्वतया प्रतिपादितं स व्यावहारिक ईश्वर एवाव्यक्तरूपः । तस्मात्परमेव शक्तितत्त्वम् । व्यक्तेस्त्रिधेति । व्यक्तस्त्रिधेति पाठः स्यात् । ईश्वरतत्त्वं शिवरूपं व्यक्तं सद्ब्रह्मविष्णुरुद्ररूपेण त्रिधा भवति । तुर्यशक्तिरपि श्रुतेः । तुर्यमात्मतत्त्वमेव शक्तिरिति श्रुतिः । शक्तिरियं न ईशाधीना । अस्याः शक्ते-र्बिम्बभूतो गणेशो न तु शिवः । शिव आदिकारणमिति यानि वाक्यानि प्रतिपादयन्ति तानि सर्वाणि शक्तिपराणि योजनीयानि ॥

इति नन्दिकेशमतनिरासो नाम षष्ठितमं प्रकरणम् ॥

अथ महावाक्यतात्पर्यप्रदर्शकं बादरिमतं प्रदर्शयति—*ब्रह्म वा इदमग्र* इति । तत्र ब्रह्मैवाद्वितीयं परं तत्त्वमिति प्रतिपादयद् बृहदारण्यकोपनिषद्गतं ( बृ. १।४।१०,११ ) मैत्र्युपनिषद्गतं ( मैत्री ६-१७ ) महावाक्यं प्रदर्शयति । छान्दोग्योपनिषद्गतं ( छा. ३।१४।१ ) सर्वं खल्विदं ब्रह्मेति वाक्यमपि विचार-णीयम् । तदनन्तरमात्मा वा इदमेक एवाग्र आसीदिति आत्मैक्यप्रतिपादकमैतरेयो-पनिषद्गत-(ऐ. उ. १।१) मात्मैक्यप्रतिपादकं महावाक्यमभिधत्ते । तदनन्तरं सदेव सोम्येदमग्र आसीदिति च्छान्दोग्योपनिषद्गतं सदैक्यं प्रतिपादयन्महा-